# विभागाध्यापकाः



डॉ.विश्वरञ्जनपतिः
सहाचार्यः, ज्योतिषविभागाध्यक्षः



डॉ.विजयलक्ष्मीमहापात्रः
सहाचार्या, ज्योतिषविभागः



डॉ. ज्योतिप्रसाददाशः
सहाचार्यः (संविदा), ज्योतिषविभागः



डॉ.नीलमाधवदाशः
संविदाचार्यः, ज्योतिषविभागः



गणेशप्रसादमिश्रः
अध्यापकः (अतिथिः), ज्योतिषविभागः

# ज्योतिषविभागस्य प्रयोगशालायाः छायाचित्राणि















वेदचक्षुः

ISSN - 2456-1916

# ज्योतिषामृतम्

## ज्योतिषविभागीयवार्षिकपत्रिका

### शिक्षासत्रम् - २०२०-२१

### (ASTROLOGICAL ANNUAL NATIONAL RESEARCH JOURNAL)

*

संरक्षकः

प्रो. खगेश्वरमिश्रः

निदेशकः

*

मुख्यसम्पादकः

डॉ.विश्वरञ्जनपतिः

*

सम्पादकाः

डॉ. विजयलक्ष्मीमहापात्रः

डॉ. ज्योतिप्रसाददाशः

डॉ. नीलमाधवदाशः




केन्द्रीयसंस्कृतविश्वविद्यालयः

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

# ज्योतिषामृतम्
## JYOTISHAMRUTAM

**ISSN - 2456-1916**

| | | |
|---|---|---|
| मुद्रक एवं प्रकाशकः | : | ज्योतिषविभागः<br>श्रीसदाशिवपरिसरः, पुरी, ओडिशा |
| वर्षम् | : | २०२०-२१ |




| | | |
|---|---|---|
| प्रतिलिपयः | : | २०० |
| प्रकाशनस्थलम् | : | पुरी |
| मुद्रणालयः | : | एच.पी. कम्प्यूटर्स<br>गन्धर्वमठसमीपे, क्लार्क रोड, पुरी- ७५२००१ |
| मूल्यम् | : | १०० रुप्यकाणि |

**प्रो. खगेश्वरमिश्रः**
निदेशकः
केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीसदाशिवपरिसरः, पुरी-७५२००१ (ओड़िशा)
दूरभाष : ०६७५२-२२३४३९




**Prof. Khageswar Mishra**
**Director**
**CENTRAL SANSKRIT UNIVERSITY**
Shree Sadashiva Campus,
Puri-752001 (Odisha)
Phone : 6752-223439

# शुभाशंसनम्

**प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।**
**अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्त्रमपि।।**

वेदे यागानुष्ठानादीनि यज्ञकर्माणि विधीयन्ते। इष्टफलप्राप्तिपूर्वकयज्ञकर्मसम्पादनार्थं समुचितशुभकालोऽपेक्ष्यते। तदर्थं वेदाङ्गभूतकालनिधानाख्यं सिद्धान्त-संहिता-होरेति त्रिस्कन्धात्मकं ज्यौतिषं शास्त्रं प्रप्रथमं ब्रह्मदेवः नारदाय कथयामास। अतः प्राग्वैदिककालात् ज्यौतिषशास्त्रस्य प्राधान्यमुपलक्ष्य श्रीभास्कराचार्यः स्वीयसिद्धान्तशिरोमणौ वदति यथा -

**वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतः स्याद्वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्।।**

वेदपुरुषस्य चक्षूरूपकं शास्त्रं भवति ज्यौतिषं शास्त्रम्। नेत्रं विना कर्णनासादिभिः संयुतः मानवः किमपि कार्यं कर्तुं न शक्नोति। अतः चक्षुः यथैव शरीरे सकर्मकाङ्गत्वेन विचार्यते तथैव वेदाङ्गेषु नेत्ररूपकं ज्यौतिषं शास्त्रं प्राधान्यमावहति एव। ज्यौतिषशास्त्रस्याध्ययनेन नरः धर्मार्थकामान् लभते ।

एवमेव व्यस्तबहुलसमाजे प्रत्येकं मुहूर्तं ज्यौतिषशास्त्रस्यावश्यकतास्तीति हेतोः शास्त्रमिदं सर्वथा परिपालनीयं संरक्षणीयं परिप्रसारणीयञ्चेति मे मतिः। एतदेवाभीष्टपूर्तये शास्त्रजिज्ञासूनां छात्राणामध्यापकानां लोकानां च ज्ञानाभिवृद्धयेऽस्माकं केन्द्रीयसंस्कृतविश्वविद्यालये श्रीसदाशिवपरिसरे ज्यौतिषविभागे **ज्योतिषामृतम्** इति नामाख्या वार्षिकशोधपत्रिका प्रकाश्यते। एतदर्थमाशीर्वचोभिः मदीयां वार्तां प्रसारयामि। परिसरस्यास्य ज्यौतिषविभागस्य प्राध्यापकानां सुरसरस्वतीसमुपासकानां छात्राणां चायुर्यशश्चाहं कामये।

इति शुभाकाङ्क्षी

**(प्रो. खगेश्वरमिश्रः)**
निदेशकः
केन्द्रीयसंस्कृतविश्वविद्यालयः,
श्रीसदाशिवपरिसरः, पुरी (ओडिशा)

## सम्पादकीयम् 

**"वेदस्य निर्मलं चक्षुः ज्योतिश्शास्त्रमकल्मषम्"** सुविदितमिदं यज्जौतिषं शास्त्रं वेदाङ्गेष्वन्यतमम्। विविधाभिः सूक्तिभिरस्य महत्त्वं प्रतिपादितं दृश्यते बहुषु स्थलेषु। भारतीयसंस्कृतौ ज्ञानस्याधारभूतानां वेदानां नेत्रपदारूढं शास्त्रं मानवानां कृते मार्गदर्शकं कथन्न भवितुमर्हति ? वस्तुतः ज्यौतिषशास्त्रं केवलं समग्रस्य वेदाङ्गस्याङ्गं नास्ति, अपितु समग्रस्य जीवनस्याप्याङ्गभूतं विद्यते। गर्भाधानकालादारभ्यान्त्येष्टिकर्मपर्यन्तं सर्वेषां षोडशसंस्काराणां कालनिर्धारणं ज्यौतिषशास्त्रादेवस्माभिः क्रियते। अतः शास्त्रस्यास्य कालविधानशास्त्रमिति नामान्तरम्। प्रसङ्गेऽस्मिन् आचार्यभास्करः स्व कालजयाख्येग्रन्थे सिद्धान्तशिरोमणौ वक्ति-

**वदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वाविहिताश्च यज्ञाः।**

**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।**

कालविधानात्मके शास्त्रे कालस्य द्वौ भेदौ कथितौ। तच्च लोकानामन्तकृत्कालः, कालोऽन्यः कलनात्मकः। स च कलनात्मकः कालः स्थूलसूक्ष्मप्रभेदाभ्यां द्विविधः। इत्यत्र प्राणादयः कालाः स्थूलाः व्यवहारयोग्याश्च। त्रुट्यादयः सूक्ष्माः, व्यवहर्त्तुमशक्या। सूक्ष्मतमत्रुटिकालादारभ्य महत्तमं कालखण्डं कल्पं यावत् ज्योतिषशास्त्रे कालगणना विद्यते। कल्पस्तु ब्रह्मदिनम्। अर्थात् ब्रह्मा स्वब्रह्मदिनान्ते सृष्टिं समाप्य कल्पं यावत् स्वपिति। एतेषां कालखण्डानां ज्ञानं भुवः सूर्यचन्द्रमसोः नक्षत्राणाञ्चाधारेण भवति। प्रमुखव्यवहारोपयोगि कालत्वेन सौरसावननाक्षत्रचान्द्राणां व्यवहारः क्रियते अस्माभिः। अस्माकं व्यवहारदृष्ट्या ज्योतिषशास्त्रस्य मुख्यविभागत्रयं भवति। उक्तञ्च-**"सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्"।**

**सिद्धान्तस्कन्धः-** अस्मिन् स्कन्धे सूक्ष्मतमकालखण्डादारभ्य महत्तमकालखण्डं यावत् कालगणना तथा द्विविधगाणितिकपद्धत्या विविधयन्त्राणां साहाय्येन ग्रहाणामवस्थितिज्ञानमस्य स्कन्धस्य प्रमुखप्रतिपादितविषयः।

**संहितास्कन्धः-** सं हितं सम्पादितं येन स्कन्धेन भवति तत् संहितास्कन्धः। संसारे विद्यमानानां सर्वेषां जीवानां सामूहिकरूपेण शुभाशुभज्ञानं क्रियते अनेन स्कन्धेन। अत्र अयनचलन-ग्रहचार-वृष्टि-दकार्गल-दिग्दाह-उल्कापातादयः विविच्यन्ते। वनस्पतीनां संरक्षणं संवर्धनं च कया रीत्या सम्भवति तस्य ज्ञानमपि ज्योतिषशास्त्रस्य संहितास्कन्धः निर्दिशति।

**होरास्कन्धः-** अहोरात्रशब्दात् आद्यन्तवर्णलोपात् होराशब्दः निष्पन्नो भवति। स्कन्धेऽस्मिन् वैयक्तिकफलनिरूपणं प्रतिपादितं वर्तते। आधानकालादारभ्य पञ्चत्वपर्यन्तं प्रतिक्षणं ग्रह-नक्षत्र-राशीनां पारस्परिकसम्बन्धः कथमस्मान् प्रभावयति तस्य शास्त्रीयविमर्शनं विवेचितं वर्तते।

आधुनिकविज्ञानस्यानुदिनं विस्तारमवलोक्य केषाञ्चन मनसि विचारोऽयं समायाति यत्, ज्योतिषशास्त्रस्य प्रतिष्ठा पुरा महत्तराऽऽसीत् परन्तु इदानीमस्य का आवश्यकता ? विज्ञानप्रभावेण जनाः सञ्चरन्ति अन्तरिक्षे। अन्तरिक्षयानेन भूपृष्ठादन्यग्रहगोलकं प्रति गन्तुं क्षमाः भवन्ति। अयं विज्ञानस्योत्कर्षः, परन्तु सूक्ष्मदृष्ट्या विचारयामस्तदा मनुष्यः

आध्यात्मिकचिन्तनं त्यक्त्वा भौतिकसुखेन प्रभावित:। अत: आध्यात्मिकताया: दिनानुदिनं ह्रासता संलक्ष्यते। येन अस्माकं सुखदु:खयोर्नियामका: कर्मसिद्धान्ताश्च प्रतिकूलप्रभावेन प्रभाविता: भवन्ति। काल आसीत्, स्वगृहे उपविश्य ज्योतिर्गणितमाध्यमेन दैवज्ञा: आग्रिमवर्षस्य शुभाशुभे गणितक्रियया सम्पादयन्ति स्म। चन्द्रग्रहणस्य सूर्यग्रहणस्य च कालं सूचयन्ति स्म लोके। किमिदानीं विज्ञानं वर्षेभ्य: पूर्वं वक्तुं शक्नुयात् यत् ग्रहणं भविष्यति ? न वेति ? मानवस्य समुन्नतये विज्ञानस्यावश्यकता अस्ति परन्तु साऽऽवश्यकता यदा विनाशकारिणी भवति तदानीं किं वयं वदाम: विज्ञानमस्माकं समुन्नतिकारकम् ? नैव । विज्ञानबलेन महायन्त्राणामाविष्कार:, तेन विकासोन्मुखी समाज: विनाशतां प्रति पलं सरति। वयं साम्प्रतं तस्यैव ज्ञानस्य, विज्ञानस्य च परिपोषका: वाहकाश्च। अत: भारतीयानां यत् दार्शनिकं चिन्तनं आसीत् तस्मात् वयं क्रमश: दूरङ्गता: भवाम:। भारतीया: पुनर्जन्मविश्वासिन:। प्रारब्धस्य सत्पुण्यसकाशात् मानवकुले समुत्पन्न: भवति प्राणी। तदनु तस्य शुभाशुभफलम्। प्रसङ्गेऽस्मिन् दैवज्ञ: वराहमिहिर: स्व लघुजातके लिखति -

**यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मण: पक्तिम्।**

**व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव।।**

अन्तिमपर्वणि शास्त्रसद्भावसमवेदनशीलानां, ज्योतिर्विद्याया विभूष्यमाणानां, विद्याविद्योतितान्त: करणानां, समाजरूपिगगनमण्डले ज्योतिर्बिन्दुसदृशानां सुशोभमानानां शोधकर्तृणां ज्योतिषच्छात्राणां , जिगमिषूणां कृते पत्रिकेयं ज्ञानविज्ञानदृष्ट्या महदुपकारिका भविष्यतीति मे द्रढीयान् विश्वास:। अस्या: पत्रिकाया: गुणाभिवर्द्धनाय कृतप्रयत्नतत्परेभ्य: सुरभारतीसमुपासकेभ्य:, नितरां सारस्वतकर्मणि प्रीतिपूर्णभागग्रहीतृभ्य: प्रत्यक्षाप्रत्यक्षरूपेण प्रतिपदं प्रोत्साहितवद्भ्य: परिसरस्य सर्वेभ्य आचार्येभ्य: तथा परिसरनिदेशकेभ्य: प्रातस्स्मरणीयेभ्य: प्रो. खगेश्वरमिश्रमहानुभागेभ्यश्चाहं हार्दं कार्तज्ञ्यं विनिवेदयामि। एवमेव पत्रिकाया: सम्पादनकर्मणि विभागस्याध्यापका: साधुवादार्हा: सन्ति। यतो हि तेषामेव सफलप्रयासस्य परिणामरूपा इयं पत्रिका। टंकणकर्मणि एच. पी. कम्प्यूटरर्स संस्थाया: मानसमहोदयानां कृते शुभाशीर्वादा:। अस्मिन् महत् कर्मणि समेषां सारस्वतकर्मतत्पराणां समुज्वलभविष्यकामनापूर्वकं नीलाद्रिनाथस्य श्रीजगन्नाथस्य तथा श्रीलोकनाथस्य चरणारविन्दे नतिततिप्रदानपुर:सरं विरमति एष: विद्वच्चरणचञ्चरीको विश्वरञ्जन:।

**काले फलति वेदान्त: काव्यशास्त्रं दिने दिने।**

**सद्य: फलति गान्धारं ज्योतिर्वैद्ये मुहुर्मुहु:।।**

इति सुधीविधेय:

**मुख्यसम्पादक:**

*डॉ. विश्वरञ्जनपति:*

**ज्यौतिषविभागाध्यक्ष:**

# अनुक्रमणिका

# वास्तुपुरुषस्य शरीरतत्त्वानां विवेचनम्

-डॉ. विश्वरञ्जनपतिः

निरुक्तकारेण यास्कमुनिना प्रोक्तम् - 'वसुर्वसतेर्निवासकर्मणः' अर्थात् निवासप्रधानमिदं भारतीयवास्तुशास्त्रं, जीवनोपयोगिविशिष्टशास्त्रमित्युच्यते। वास्तुशब्दोऽयं निवासार्थकस्य वस्-धातोः तुण्-प्रत्ययेन निष्पद्यते[१]। शास्त्रमिदमथर्ववेदस्योपवेद-स्थापत्यवेदरूपेण सुप्रसिद्धमस्ति। अपि च षट्सु वेदाङ्गेषु ज्योतिषशास्त्रस्यान्तर्गतमस्तीति। ज्योतिषशास्त्रं सिद्धान्तसंहिता-होराभेदैः त्रिविधं विख्यातम्। एतेषु त्रिषु स्कन्धेषु शास्त्रमिदं संहितास्कन्धान्तर्गतत्वात् अस्य स्थापत्यवेदस्याधिष्ठातृदेवः वास्तुदेवोऽस्ति। यस्योपरि लोकपालसहिता सर्वे देवाः प्रतिष्ठिताः सन्ति। वास्तुदेवोऽयं समेषां प्राणिनां स्वात्मरक्षणं करोति। सुखं शान्तिं च विदधाति। अत एव देवोऽयं सर्वत्र भूमेरधिष्ठातृदेवरूपेण विख्यातः पूजितश्च। उक्तमपि ऋग्वेदसंहितायाम्-

**वास्तोष्यते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः ।**
**यत् त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ।।**[२]

**वस्तुपुरुषस्योत्पत्तिः वास्तुप्रार्थना च —**

वास्तुशास्त्रानुसारमस्य वास्तुपुरुषस्योत्पत्तिः भाद्रपदमासि, कृष्णपक्षस्य तृतीयायां, शनिवासरे, कृत्तिकानक्षत्रे, व्यतिपातयोगे, विष्टिसंज्ञके करणे कुलिकवेलायां च अभूत् । यथोच्यते-

**तमेव वस्तुपुरुषं ब्रह्मा समसृजत्प्रभुः ।**
**कृष्णपक्षे तृतीयानां मासि भाद्रपदे तथा ।।**
**शनिवारेऽभवज्जन्म नक्षत्रे कृत्तिकासु च ।**
**योगस्तस्य व्यतीपातः करणं विष्टिसंज्ञकम् ।।**
**भद्रान्तरेऽभवज्जन्म कुलिकेतु तथैव च ।।**[३]

तस्योत्पन्नऽनन्तरं स भीषणशब्दं कृत्वा ब्रह्माणम् अप्रार्थयत् । तद्यथा-

**क्रोशमानं महाशब्दं ब्रह्माणं समपद्यत ।।**
**चराचरमिदं सर्वं त्वया सृष्टं जगत्प्रभो ।**
**विनापराधेन च मां पीडयन्ति च सुराः भृशम् ।।**[४]

वास्तुदेवस्य प्रार्थनां निशम्य ब्रह्मदेवः श्रद्धया तस्मै वरं दत्त्वा अवदत्- भो वास्तुपुरुष! प्रसन्नो भवतु, भवतां हिताय सर्वं करिष्यामि इति यथाऽऽह-

**वरं तस्मै ददौ प्रीतो ब्रह्मा लोकपितामहः ।**
**ग्रामे वा नगरे वापि दुर्गे वा पतनेऽपि वा ।।**
**प्रासादे वा प्रपायां च जलोद्याने तथैव च ।**
**यस्त्वां न पूजयेन्मर्त्यो महोद्वास्तुनरस्य भोः ।।**
**अश्रियं मृत्युमाप्नोति विघ्नस्तस्य पदे पदे ।**
**वास्तुपूजामकुर्वाणोस्तवहारो भविष्यति ।।**[५]

अस्य वास्तुपुरुषस्य प्रादुर्भावविषये प्राचीनग्रन्थे एका कथा लभ्यते। पुरातनकाले सत्ययुगस्यारम्भसमये स्वशरीरेण पृथिव्यामाकाशं व्याप्य कश्चन विराट्पुरुषः अजायत, यस्य मुखः विकरालः आसीत्। तं दृष्ट्वा सकलाः सुराश्चकिताः विस्मयगताश्च। तदनन्तरं ते देवाः सहसा स्वस्वहस्तैस्तं विराटपुरुषं स्वीकृत्य पृथिव्युपरि अधोमुखं कारयित्वा प्रतिष्ठापितवन्तः। तदा येन देवेन तस्य विराटपुरुषस्य यदङ्गं गृहीतं सोऽपि तत्रैव अवसत् । तस्य विराटपुरुषस्य ब्रह्मणा वास्तुपुरुषेति संज्ञा प्रदत्ता । यथोक्तम्-

**पुरा कृतयुगे ह्यासीन्महद्भूतं समुत्थितम् ।**
**व्याप्यमानं शरीरेण सकलं भुवनं ततः ।।**
**तद्दृष्ट्वा विस्मयं देवा गताः सेन्द्रा भयावृताः ।**
**ततस्तैः क्रोधसन्तप्तैर्गृहीत्वा तमथासुरम् ।।**
**विनिक्षिप्तमधोवक्त्रं स्थितास्तत्रैव ते सुराः ।**
**तमेव वास्तुपुरुषं ब्रह्मा समभिकल्पयेत् ।।**[६]

मानवशरीरमिव वास्तुपुरुषस्य शरीरे शिरमुखादीनि विभिन्नानि अङ्गानि परिकल्पितानि। वास्तुनरस्य शिरः पूर्वोत्तरे ऐशान्यकोणे चाधोमुखं विराजतेति प्रायः सर्वैः आचार्यैः स्वीकृतम्। किन्तु मयाचार्येण किञ्चित् भिन्नं प्रतिपादितम्। तदनुसारेण वास्तुनरस्य षड्वंशं हृदयमेकम्, चतुःशिरः, चत्वारि मर्मस्थलानि कथितानि। तथा तस्य शिरः पूर्वदिशि वर्तते । यथाऽऽह-

**षड्वंशमेकहृदयं चतुर्मर्म चतुश्शिरम्।**
**मेदिन्यां वास्तुपुरुषं निकुञ्जं प्राक्शिरं विदुः ।।**

अनेन प्रकारेण तस्य पुरुषस्य शिरसि भगवान् ईशः स्थितः। कर्णयोर्दितिः पर्जन्यश्च, वामदक्षिणस्कन्धयोरदितिजया, गले आयः, हृदि आपवत्सश्च। स्तनयोः मरीचिपृथ्वीधरौ

संस्थितौ । नाभिमध्ये ब्रह्मा, नाभिपृष्ठे सावित्री, कुक्षिमध्ये रुद्रः, रुद्रदासश्च । श्रोणिमध्ये इन्द्रः, इन्द्रजयश्च, अङ्गुष्ठाग्रे पितरः, गुल्फे दौवारिकः, कूर्पराग्रे मृगः, अन्तरीक्षे द्वितीयकूर्परे वा नागः, वामे जानौ रोगः, दक्षिणे जानौ अग्निदेवश्च। दक्षिणे भुजे महेन्द्रादित्यसत्यभृशान्तगणाः, तथा वामे भुजे मुख्यभल्लाटसोमादितिगणाः सन्ति। वामवाहौ सविता, दक्षिणवाहौ रुद्रः, वामोरौ मित्रः, दक्षिणे विवस्वां, वामनलके सुग्रीवः, पुष्पदन्तः, वरुणः, असुरः, शोषिका, पापयक्ष्माश्च वसन्ति। एवमेव दक्षिणनलके पूषा वितथः, गृहक्षतः, यमः, गन्धर्वः, भृङ्गराजश्च स्थिताः। ततः बाह्यदेवानां परिचयं क्रियते । यथा ईशोर्ध्वे चरकी, पावकोर्ध्वे विदारिका नैर्ऋत्यूर्ध्वे पूतना, रोगर्ध्वे पापराक्षसी च तिष्ठति। प्राच्यां पिलिपिच्छां दक्षिणदिशि जृम्भा, वारुण्यां स्कन्दः, उत्तरदिशि अर्यमा च निवसति। एतेषां बाह्यदेवानां पदविधिः नास्ति। एते केवलं पूजा गृहणान्ति। वास्तुपुरुषस्य अङ्गसन्धिसूत्राणि विज्ञाय समस्तपुण्यस्थानानि पूज्यन्ते । षोडशसन्धिः अष्टाङ्गानि, अथ च षोडशसूत्रयुक्तवास्तोः पञ्चक्षेत्राणि भवन्ति। तस्य स्वरूपं पुरुषाकृत्यैव भवति। यथोच्यते–

**ईशस्तु संस्थितो मूर्ध्नि पर्जन्यः कर्णयोर्दितिः ।**<br>
**जयादिति स्कन्धयोश्च ह्युभयोर्वाममदक्षिणम् ।।**<br>
**आपस्तथा च गलके आपवत्सो हृदि स्थितः ।**<br>
**मरीचिः पृथ्वीधरश्च संस्थितौ स्तनयोर्द्वयोः ।।**<br>
**नाभिमध्ये स्थितौ ब्रह्मा नाभिपृष्ठानुसंस्थितौ ।**<br>
**सावित्री कुक्षिमध्ये तु रुद्रदासो द्वितीयके ।।**<br>
**इन्द्र इन्द्रजयश्चैव श्रोणिमध्ये तु संस्थितौ ।**<br>
**अङ्गुष्ठाग्रे च पितरौ गुल्फे दौवारिको मृगः ।।**<br>
**अन्तरीक्षः कूर्पराग्रे नागश्चैव द्वितीयके ।**<br>
**वामे जानौ स्थितो रोगो दक्षिणे चाग्निदेवता ।।**<br>
**महेन्द्रादित्यसत्यादिभृशान्ता दक्षिणे भुजे ।**<br>
**मुख्यभल्लाटसोमादिगिर्यन्ता वामके भुजे ।।**<br>
**सविता याम्यतो बाहौ रुद्रश्चैव द्वितीयके ।**<br>
**मित्रश्च वामन उरौ विवस्वांश्चैव दक्षिणे ।।**<br>
**सुग्रीवः पुष्पदन्तश्च वरुणासुरशोषकाः ।**<br>
**पापयक्ष्मा पडेते वै नलके वामके स्थिताः ।।**

**पूषा च वितथश्चैव गृहक्षतयमो तथा ।**
**गन्धर्वभृङ्गादेवाः षड् दक्षिणे नलके स्थिताः ।।**
**ईशोर्ध्वे चरकीं विद्यात् पावकोर्ध्वे विदारीकाम ।**
**निर्ऋत्यूर्ध्वे पूतनां च रोगर्ध्वे पापराक्षसीम् ।।**
**प्राच्यां तु पिलिपिच्छां स्याज्जृम्भा स्याद्यायतो दिशि ।**
**वारुण्यां विन्यसेत्स्कन्दामर्यमा चोत्तरस्थिता ।।**
**नास्ति चासां पदविधिपूजां गृह्णन्ति केवलम् ।**
**निवास सर्वदेवानां वास्तु वै स्थनतो विदुः ।।**
**अङ्गं सन्धि च सूत्रादि विद्यात्पश्चाच्च वास्तुनः ।**
**समस्तपुण्यस्थानानि वास्तुपूजासु वै विदुः ।।**
**द्व्यष्टसन्धि तथाष्टाङ्गं द्व्यष्टसूत्रं तथैव च ।**
**पञ्चक्षेत्रमिदं वास्तु स्वरूपं पुरुषाकृतिः ।।**[८]

वास्तुपुरुषस्य स्वरूपपरिकल्पना सम्पूर्णनिर्धारितस्य भूभागस्योपरि क्रियते । भूक्षेत्रस्य दिङ्निर्धारणसमये, परिमापने, पदविन्यासकाले च तस्य चित्रणं क्रियते। येन प्रकारेण मानवशरीरे शीर्षमुखबाहुहृदयोदरादिविविधावयवाः चिन्त्यन्ते तथैव वास्तुपुरुषस्य चिन्तनसमये तस्य शरीरे सर्वाणि अङ्गानि विचार्यन्ते। यथोक्तम्–

**एक एव पुमानेषु बहुधा परिकल्पितः ।**
**सर्वस्मिन्नपि संस्थाने विभक्ते लक्षयेत्ततः ।।**
**शरीरं वास्तुपुंसोऽस्य गुणदोष भवति यत् ।**
**मुखं मूर्धा ततः श्रोत्रे दृक्ताल्वोष्ठरदाः क्रमात् ।।**
**वक्षः कण्ठः स्तनौ नाभिर्मेढ्रमुष्कावथो गुदम् ।**
**बाहुः प्रबाहु पाणी स्फिगुरूजङ्घं पदद्वयम् ।।**
**कल्पयेदेवमेतेन स भवेत् पुरुषाकृतिः ।।**[९]

वास्तुपुरुषस्य शरीरे वंशानुवंशमहावंशमर्मोपमर्मसन्ध्यनुसन्धयः कल्पिताः सन्ति । याः सिराः कर्णगताः स्युस्ता नाड्यः कीर्तिताः। एतस्य प्रमाणं पदस्य षोडशभागसमं भवति। एवमत्र महावंशः कथितः। महावंशः पदस्य पञ्चमभागतुल्यं भवेदिति । एवमुक्तं प्राचीनाचार्येण–

**सिरावंशानुवंशाश्च सन्धयः सानुषन्धयः ।।**
**मर्माण्यथ महावंशा लक्ष्म्या वास्तुशरीरगाः ।**
**सिरः कर्णगता याः स्युस्ता नाड्यः परिकीर्तिताः ।।**

**पदस्य षोडशो भागस्तत्प्रमाणं प्रकीर्तितम् ।**
**सिराः महावंशौ प्रोक्तप्रतीच्यौ याम्यो दीच्यौ च मध्यगौ ।**
**प्रमाणं पञ्चमो भागः पदस्योदाहृतं तयोः ।।**[१०]

वास्तुशरीरे याः समुद्दिष्टारेखाः विद्यन्ते, ताः सर्वाः रेखाः वंशरूपे विख्याताः। या तीर्यगायतरेखाः दृश्यन्ते, ताः अनुवंशाः कथिताः। वंशरेखायां याः रेखाः परस्परं सम्पाताः ताः मर्मरेखा नाम्ना सम्प्रचक्षेत। एवमेव वंशानुवंशे याः रेखाः पदमध्ये व्यवस्थिताः ताः रेखाः उपमर्मनाम्ना प्रसिद्धाः। एवमुपमर्मपदस्य मानं पदस्याष्टादशद्वादशषोडशांशतुल्यं भवति । अनेन प्रकारेण वंशादीनां मानं पदमानमनुरुपमुक्तम्। पूर्वोक्तेषु वंशाष्टकेषु यानि सङ्गमस्थलानि उक्तानि तानि सन्धिस्थलरूपेण परिकीर्तिताः। पुनरत्र वंशान्तर्गतेषु याः सन्धयः प्रोक्तास्ते अनुसन्धिरूपेण सुप्रसिद्धाः। एतेषां सन्धीनां प्रमाणं बालाग्रतुल्यं परिचक्षते। बालाग्रधर्म अनुसन्धीनां प्रमाणमुदीरितम्। तानि मर्मोपमर्मस्थलानि सन्धिस्थलानि च बुद्धिज्ञः मनुजः कदापि न पीडयेत्। यथोच्यते समराङ्गणसूत्रे-

**वंशास्तेऽस्मिन् समुद्दिष्टा रेखा याः स्युर्मुखायताः ।।**
**यास्तिर्यगायता रेखास्तेऽनुवंशाः प्रकीर्तिताः ।**
**सम्पाता ये स्युरेतेषां मर्म तत् सम्प्रचक्षते ।।**
**उपमर्माणि तान्याहुः पदमध्यानि यानि हि ।**
**भागोऽष्टमोऽथ दशो द्वादश षोडशोऽपि च ।।**
**पदतो मानमिष्टं स्याद् वंशादीनामनुक्रमात् ।**
**वंशाष्टकस्य यः सन्धिः स सन्धिरिति कीर्तितः ।।**
**ये पुनः स्युस्तदङ्गानां प्रोक्तास्ते चानुसन्धयः ।**
**बालाग्रतुल्यं सन्धीनां प्रमाणं परिचक्षते ।।**
**तदर्धमनुसन्धीनां प्रमाणं समुदीरितम् ।**
**यत्नेनैतानि सन्त्यज्य वास्तुविद्याविशारद ।।**[११]

**वंशरज्जुलक्षणं महामर्माणि च —**

प्रथमतः महामर्मस्थलानि वर्ण्यन्ते । अत्र एकादशीतिपदात्मके वास्तुक्षेत्रे अतिमर्मस्थलानां चयनम्। आदौ वास्तुमण्डलं निर्माय तत्र बाह्यदेवान् स्वस्वस्थाने संस्थाप्य रेखान् कुर्यात्। वास्तुक्षेत्रे रोगादारभ्य अनिलं यावत् तिर्यक् सूत्रं नयेत्। ततः पितृतोऽग्निं यावत्, ततो वितथात् शोषं यावत् सूत्रं दद्यात्। पुनरत्र मुख्याद् भृशं यावत्, ततो

जयन्ताद्भृङ्गपर्यन्तम् । ततः आदितः सुग्रीवं यावत् सूत्रं प्रसारं कुर्यात्। अनेन प्रकारेण सूत्रनिर्माणेन नवसम्पाताः स्युः। एतानि नवक्षेत्राणि एकाशीतिपदात्मके क्षेत्रे वास्तुपुरुषस्य अतिमर्मस्थलानि कथितानि। यथोक्तम्-

**रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात् ।**
**मुखाद् भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम् ।।**
**तत्सम्पाता नव ये तान्यतिमर्माणि सुप्रतिष्ठानि ।**
**यश्च पदस्याष्टांशस्तत् प्रोक्तं मर्मपरिमाणम् ।।**[१२]

**वास्तुक्षेत्रेऽतिमर्मस्थानचक्रम्**




**वंशशिरावर्णनम्-**

उपर्युक्तं षट्सूत्रकं वंशशब्देनोच्यते । अथ च वास्तुविभागाय या पूर्वापरा दक्षिणोत्तरा रेखा क्रियते सा सिरा कथ्यते । वास्तौ एकपदस्य विस्तीर्णो यावत्परिमितहस्तः कथितः

तावत् परिमितदङ्गुलम् एकवंशस्य विस्तृतं भवति । प्रपञ्च वंशविस्तारोऽध्यर्धो दिवं प्रगुजितः शिरामानं प्रोक्तम् । तद्यथा–

**पदहस्तसंख्यया सम्मितानि वंशोऽङ्गुलानि विस्तीर्णः ।**
**वंशव्यासोऽध्यर्घः शिरप्रमाणं विनिर्दिष्टम् ।।**[१३]

वास्तुनरस्य मर्मस्थलानि प्रयत्नेन रक्षेत् । तत्स्थलं कीलस्तम्भादिभिः न पीडयेत् । तत्र मर्मस्थले उच्छिष्टान्नपवित्रवस्तूनि न स्थापनीयानि। अन्यथा वास्तुपुरुषः पीडितो भवति तस्य शरीरस्य यदङ्ग पीड्यते गृहकर्त्तृरपि तदङ्ग पीडितं भवति। अतः सुविज्ञः मनुजः ततस्थलं पूर्णतः परित्यजेत्। यथा–

**तान्यशुचिभाण्डकीलस्तम्भाद्यैः पीडितानि शलैश्च ।**
**गृहभर्तुस्तत्तुल्य पीडामङ्गे प्रयच्छन्ति ।।**[१४]
**सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेत् गृही गृहान्तःस्थलम् ।**
**उच्छिष्टपघाताद् गृहपतिरुपतप्यते तस्मिन् ।।**[१५]

**सन्दर्भग्रन्थाः-**

१.शब्दकल्पद्रुमः चतुर्थखण्डः पृ. ३५८
२.ऋग्वेदः ७/५४/३
३.विश्वकर्माप्रकाशः १/११-१२$^{१}/_{२}$
४.तत्रैव १/१२$^{१}/_{२}$ तः १४
५.विश्वकर्माप्रकाशः १/१५
६.बृहत्संहिता अ. ५३
७.मयमतम् ७/४९
८.अपराजितापृच्छा. ५५/१-१४
९.समराङ्गणसूत्रधारः १२/२१-२३
१०.समराङ्गणसूत्रधारः १२/२४-२६
११.समराङ्गणसूत्रधारः १२/२७-३२
१२.बृहत्संहिता ५३/६१-६२
१३.बृहत्संहिता ५३/६३
१४.बृहत्संहिता ५३/५८
१५.बृहत्संहिता ५३/६४

—०—

केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीसदाशिवपरिसरः, पुरी

# ऋग्वेदे वास्तुचर्चा

-डॉ. महेशझा

संसारे सकलजीवा आनन्दावाप्तये यथाशक्ति यतमानाः दृश्यन्ते। तत्रापि मनुष्याः विशेषतया चेष्टन्ते। विवेकशीलाः मानवाः लौकिकाऽलौकिकदुःखान् तर्त्तुमीहन्ते। क्रमेऽस्मिन् भोजन-वसन-आवासव्यवस्था अनिवार्यतया नितरामपेक्षिता। प्राचीनकाले यथा जीवनयापनशैली आसीत् न तथाद्य वर्तते। यतोहि कालक्रमेण मानवानां व्यवहारोऽपि परिवर्तितः। शनैः शनैः सभ्यताऽपि विकसिता। विकासस्य परिणामत्वेनैव नानाग्रन्थान् लिलेखु आचार्याः। यतो हि अनुभूतज्ञानस्य संरक्षणमपि आवश्यकमभूत्। तत्रादौ श्रुतिपरम्परया ज्ञानस्य रक्षणं चक्रुः ऋषयः। ततश्च गच्छति काले लेखनपरम्परा प्रारब्धा। वर्तमानोपलब्धग्रन्थेषु प्राचीनतमाः वेदाः सन्तीति प्राज्ञाः प्रमाणयन्ति। वेदेष्वपि ऋग्वेदः प्रज्ञा स्थाने सुशोभते। प्राचीनकालस्य या व्यवस्था आसीत् तस्याः व्यवस्थायाः साक्षी वेद एव। वैदिककालेऽपि भारतीयसभ्यता अन्यसभ्यताया अपेक्षाया उन्नतासीत्। यतो हि भोजनवस्त्रैः सह गृहनिर्माणकलाया अपि परिज्ञानमासीत् तदानीन्तनजनेषु। न केवलमलौकिकज्ञानेऽपितु लौकिकज्ञानेऽपि जनाः दक्षा आसन्। यतोहि उत्तमावासस्य परिचर्चा स्पष्टरूपेण ऋग्वेदे परिलक्ष्यते। यद्यप्यथर्ववेदस्योपवेदः स्थापत्यकलाः प्रस्तौति तथापि परिचर्चायाः मूलम् ऋग्वेदे एव दरीदृश्यते। तदिहोपस्थाप्यते-

ऋग्वेदे आवासाय शर्म(१)-धाम(२)-गुहा(३)-गृह(४)-सदन(५)-सद्म(६)-वरूथ(७)-वास्तु(८)-वसति(९)-हर्म्य(१०)-वेश्म(११)-निवेश(१२)-भुवन(१३)-शरण(१४)-अज्म(१५)-गर्त(१६)-दुरीण(१७)-इति शब्दानां प्रयोगाः दृश्यन्ते। एतैः शब्दैः ज्ञायते यत् वैदिकजनाः गृहनिर्माणकलायां नूनं दक्षाः, विशेषतया वरूथशब्दस्य प्रयोगोत्तमगृहाय विद्यते। तद्यथा- तौ हयानो-महि वरूथ उपवेदेन तमसागृणीमसि (१८) इति पाठो विद्यते। वरूथ अर्थात् श्रेष्ठावासः। किञ्च **"त्रिवरूथशर्मः"** इति पाठो विद्यते यस्यार्थः त्रितलावासः।

वैदिककाले मृण्मयगृहमेवासीदिति केचन वदन्ति। तच्चिन्त्यम्। कारणं त्रितलावासस्य व्यवस्था परिकल्पना वा मृत्तिकया कर्त्तुं नैव शक्या। किञ्च **"मन्दामहे दश तस्य घासेर्दुर्यत् पञ्च विभुतो यन्त्यन्न। किमिष्टाश्वं इष्टरश्मिरेत ईशानासस्तरुष ऋञ्जते नृन्**(१९)इति मन्त्रे "इष्ट" इति शब्दः इष्टिकार्थे विद्यते। भवनं दीर्घतममुत्तमञ्च भवेतामिति मन्त्रेण ज्ञायते। तद्यथा - **"बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते इति** (२०)"। वरुणस्य गृहाः सहस्रद्वारवन्तः सन्तीत्याशयः।

आधिक्येन गृहाः स्युः। तद्यथा **"मृलत नो मरुतोः मावधिष्टनाऽस्मभ्यं शर्म बहुलं वियत्तन"** (२१)इति। गृहाः दीर्घाः (५.५५.९) (६.१५.३), अछिद्राः (२.३.८) दृढ़ाश्च (१.१२७.५) भवेयुः। गृहाणां रक्षणार्थमेको देवोऽपि विद्यते वास्तोष्पतिरिति वैदिकाः सप्तममंण्डले चतुष्पञ्चाशत्तमे सूक्ते वास्तोष्पतिं प्रार्थयामासुः। इत्थं वक्तुं शक्यते यत् वैदिककालेऽपि वास्तुज्ञानमासीदिति।

कालान्तरे पृथग्रूपेण वास्तुशास्त्रस्याविर्भावो जातः। किञ्च स्यापत्यकलायाः एका शाखा एको भेदो वा वास्तुरूपेण आविर्भूतः। प्रसङ्गेऽस्मिन् दैवज्ञवराहमिहिरोऽब्रवीत्-

**वास्तुज्ञानमथातः कमलभवान्मुनिपरम्परायातम्।**
**क्रियतेऽधुना मयेदं विदग्धसांवत्सरप्रीत्यै।।**(२२) **इति**

यद्यपि भारतीयपरम्परायां शास्त्रोत्पत्तिकर्त्ता ब्रह्मैव विद्यते किन्तु वैखानसागमदृष्ट्या, चतुःषष्टिकलादृष्ट्या च स्थापत्यस्याङ्गं वास्तुशास्त्रम्। इदं तु निश्चप्रचं यदेतस्य ज्ञानपरम्परा अक्षुण्णा इदानीमपि वर्धमानाऽस्ति। वास्तुशास्त्रे भूमिपरीक्षण-भवननिर्माण-भवनप्रकार-भवनाकार-भवनप्रामाण्यप्रभृतयः विषयाः आगच्छन्ति। अष्टादशवास्तुशास्त्रस्य प्रवक्तार सुप्रसिद्धाः सन्ति। तद्यथा-

**भृगुरत्रिर्वशिष्ठश्च विश्वकर्मा मयस्तथा।**
**नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः।।**
**ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च।**
**वासुदेवोऽनिरुद्धश्च तथा शुक्रो बृहस्पतिः।।**
**अष्टादशैते विख्याताः वास्तुशास्त्रोपदेशकाः।।**(२३) इति

**ब्राह्मणादिवर्णानां गृहपरिमाणाः -**

**चातुवर्ण्य व्यासो द्वात्रिंशत् सा चतुश्चतुर्हीना।**
**आषोडषाादिति परं न्यूनतरमतीव हीनानाम्।।**
**सदशांशं विप्राणां क्षत्रस्याष्टांशसंयुतं दैर्घ्यम्।**
**षड्भागयुतं वैश्यस्य भवति शूद्रस्य पादयुतम्।।**(२४) इति

ब्राह्मणगृहस्य विस्तारः (चौडाई) ३२, २८, २४, २०, १६ हस्तप्रमितः, क्षत्रियाणां गृहस्य विस्तारः २८, २४, २०, १६ हस्तप्रमितः, वैश्यानां २४, २०, १६ हस्तप्रमितः, शूद्राणां २०, १६ हस्तप्रमितः, अतिशूद्राणां कृते १६ हस्तपरिमितगृहमुन्नतं विद्यते। विचारितहस्तप्रमाणा न्यूनाधिकवास्तु अशुभं भवति यथा-

**अथ पारंशवादीनां स्तमानसंयोगदलसमं भवनम्।**
**हीनाधिकं स्वमानादशुभकरं वास्तु सर्वेषाम्।।**(२५) इति

**गृहाणां पञ्चभेदाः सन्ति। तद्यथा** -

**सर्वतोभद्रः**(२६)- यस्मिन् गृहे चतुर्दिक्षु संयुक्तालिन्दाः, चत्वारि द्वाराणि च सन्ति तद् गृहं सर्वतोभद्रनामकं भवति।

**नन्द्यावर्तः**(२७)- यस्मिन् गृहे गृहं गृहाणि वा परित अलिन्दाः सन्ति परन्तु संयुक्ता असंयुक्ताः अपि सन्ति तथा पश्चिमदिशां परित्यज्य त्रिषु दिक्षु द्वाराणि सन्ति तत् नन्द्यावर्तनम्नोच्यते।

**वर्धमानम्** (२८)- मुख्यद्वारं पुरतः भवनानुरूप अलिन्दः स्यात्। दक्षिणदिशां परित्यज्य त्रिषु दिक्षु द्वाराणि स्युः। एतादृशः वास्तुः वर्धमानसंज्ञकः भवति।

**स्वस्तिकम्**-(२९) "अपरोन्तगतोलिन्दः प्रगन्तगतौतदुत्थितौचान्यौ।
तदवधिविद्यृतरवान्यः प्राग्द्वारं स्वस्तिके शुभदम्"।। इति

**रुचकम्**-(३०) पूर्वस्यां पश्चिमायाञ्च अलिन्दौ विस्तृतौ स्याताम्। शेषौ द्वौ एतयोर्मध्ये उत्तरे दक्षिणे च स्याताम्। तथोत्तरे द्वाराभावो भवेत्तर्हि रुचकवास्तुः भवति। एताननतिरिच्य अन्यान्यपि वास्तूनि (३१)सन्ति। तद्यथा- त्रिशालवास्तुः, हिरण्यनाभवास्तुः, यमसूर्यवास्तुः, दण्डवास्तुः, वातवास्तुः, काचवास्तुः, इति।

**सामग्र्याधारेण गृहनामानि**-(३२) प्रस्तरनिर्मितं "मन्दिरम्", पक्वेष्टकानिर्मितं वास्तुभवनम्, अपक्वेष्टकानिर्मितं "सुमन्तम्", शुष्कपङ्कनिर्मितं "सुधारः", काष्ठाधिक्येन निर्मितं "मनस्यम्", वंशनिर्मितं वन्दनम्, वस्त्रनिर्मितं "विजयः", तृणनिर्मितं "कालिभः", इति उच्यन्ते।

इत्थञ्च वास्तुनः नानाभेदाः सन्ति ग्रन्थेषु येषां प्रयोगेण सामाजिकाः जनाः लाभान्विताः भवन्तीति दिक्।

**सन्दर्भसूची** - (ऋग्वेदीयसन्दर्भः)

१. शर्म -१/२२/१५.५/१६/३.१०/६६/५
२. धाम - ७/६१/४.८/४१/१०
३. गुहा -३/१/९
४. गृह - १/२२/४.२/४१/२.४/४९/३

५. सदन – १/३१/१७.३/३०/९
६. सद्म – ३/५५/१४.४/१/८
७. वरूथ – २/३४/१४
८. वास्तु – १/१५४/६.८/२५/५
९. वसति –६/३/३
१०. हर्म्य– ५/३२/५
११. वेश्म – १०/१०७/१०
१२. निवेश – ६/७१/१२
१३. भुवन – १/३५/६
१४. शरण – २/३/८
१५. अज्म –६/४/४
१६. गर्त – १/१२४/७
१७. दुरीण – १/६९/२.३/१
१८. – २/३४/४
१९. – १/१२२/१३
२०. – ७/८८/५
२१. – ५/५५/९
२२. वृ.सं.२ भागः, (वास्तुविद्याध्यायः)
२३. तत्रैव पृ – ५४५ ( मूलश्लोकाः मत्स्यपुराणस्य)
२४. वृ.सं.२ भागः, पृ.–५५
२५. तत्रैव – पृ.– ५५२
२६. पृ. – ५६२
२७. तत्रैव
२८. पृ. ५६५
२९. पृ. ५६३
३०. पृ. ५६३
३१. पृ.५६९–५७१
३२. पृ. ५७४

—०—

अध्यक्षः, नव्यन्यायविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः,
श्रीसदाशिवपरिसरः, पुरी,

# गृहारम्भकालविचार:

-डॉ. विजयलक्ष्मीमहापात्र:

ज्योतिषशास्त्रस्य प्रणयनं ब्रह्मणा वेदविहितकार्याणां सम्पादनार्थं कृतमस्ति । सामान्यतया वेदस्य मुख्यप्रयोजनं यज्ञसम्पादनं, यागाश्च वेदवाक्यांशैरेव कालाधीना: सिद्ध्यन्ति। तदर्थमुच्यते -

**आदौ कालं परीक्षेत सर्वकार्यार्थ सिद्धये।**

**कालो हि सर्वजीवानां शुभाशुभ फलप्रद:।।**[१]

सर्वेषां कार्याणां सिद्ध्यर्थं सर्वप्रथमं कालज्ञानं करणीयम् । यतो हि कालो हि सर्वजीवानां शुभाशुभफलप्रदायको भवति। शुभकालातिक्रमेण देवानामपि दोषो भवति। अत: कालातिक्रमणं न भवेत्। ब्राह्मणानां कृते कालातिक्रमणदोष: विशेषरूपेण भवति, द्रव्यहानिश्चजायते। यथा-

**कालातिक्रमणे दोष: द्रव्यहानिश्चजायते।**

**देवानाामपिदेवीनां विप्रादीनां विशेषत:।।**[२]

आकाशस्थसूर्यचन्द्रादिग्रहाणां किरणविशेषै: जगति वर्तमानाजन्तव: वस्तुविशेषाश्च प्रभाविता भवन्तीति आधुनिका: अपि अनुमन्यते। तेषां ग्रहनक्षत्रादीनां प्रभाव: कदा कस्योपरि पतति कश्च तत्परिणाम: इत्यादि विषयान् यौगिकदृष्ट्या सञ्चिन्त्य पूर्वसूरय: लोकपकारार्थं प्रत्येकं कर्म विशेषस्य करणे समुचितकालनिर्णय बहुभि: प्रकारैरनुसन्धानै: महताप्रयत्नेन आविश्चकु:। तदर्थमेव मानवै: उक्तसमुचितकाले एव नित्यनैमितिककार्याणि अनुष्ठीयन्ते। राजभवन-गृह-स्तम्भ-द्वार-कूप-विमानमण्डप-गर्भगृहादिनिर्माणे शुभकालं ज्ञात्वा कार्यसम्पादने कार्यस्य संसिद्धि: स्यादिति शास्त्रवचनम्। यथा -

**प्रासादभवनारम्भे स्तम्भस्थापन कर्मणि**

**द्वारस्थापन वेलायां भवनानां प्रवेशेन।**

**वापीतटाकनिर्माणे गोपुरारम्भ कर्मणि**

**विमानामण्डपारम्भं गर्भगेहोद्धतौ तथा**

**कालं शुभं परीक्षेत मङ्गलावाप्ति साधकाम्।।**[३]

देशभेदेन शुभकाले भिन्नता भवति। इष्टिकास्थापने शुभकाल: विशेषरूपेण भवति। तदर्थं प्रयत्नेन शुभकालं नोल्लंघयेत्। यथा देशभेदेन कालोऽपि भिन्नतां प्रतिपद्यते। इष्टिकान्यशनं शस्तं शुभकाले विशेषत:। पञ्चाङ्गमाधारीकृत्य शुभसमयस्य निर्धारणं भवति। गृहारम्भकालनिर्धारणार्थं सौरमासा: चान्द्रमासा:

नक्षत्राणि तिथयः निषिद्धयोगाः तथा लग्नादीनां विचाराणामावश्यकता वर्तते। अतः प्रसङ्गात् तत्सर्वमत्रोपस्थाप्यते।

**तत्रादौ गृहारम्भे सौरमासाः -** पौष-फाल्गुन-वैशाख-माघ-श्रावण-कार्तिकादि सौरमासाः गृहनिर्माणे पुत्र-पौत्रारोग्यादि शुभप्रदाः भवन्ति। अतः एतेषु सौरमासेषु गृहारम्भः शुभाय भवति। यथा-

**पौष-फाल्गुन-वैशाख-माघ-श्रावण-कार्तिकाः।**
**मासाः स्युर्गृहनिर्माणे पुत्रारोग्य-शुभप्रदाः ।।**[४]

**गृहारम्भे चान्द्रमासाः-**

**शोकधान्यं मृति-पशुहृति-द्रव्यवृद्धि-विनाशो।**
**युद्धं-भृत्यक्षतिरथ धनं श्रीं च वह्ने भयत्वम्।।**[५]
**लक्ष्मीप्राप्तिर्भवति भवनारम्भकर्त्तुः क्रमेण।**
**चैत्रादुच्चे मुनिरिति फलं वास्तुशास्त्रोपदिष्टम्।।**[६]

**गृहारम्भे नक्षत्राणि** -उत्तराफाल्गुनी-उत्तराषाढा-उत्तराभाद्रपदा-रोहिणी-पुष्य-अनुराधा-हस्त-चित्रा-धनिष्ठा-शतभिषा-रेवत्यादि नक्षत्रेषु गृहारम्भः शुभाय भवति। तद्यथा -

**त्र्युत्तरेऽपि च रोहिण्यां पुष्य-मैत्रे करद्वये।**
**धनिष्ठा-द्वितयेपौष्णे गृहारम्भः प्रशस्यते। ।**[७]

**गृहारम्भे तिथयः-** द्वितीया-तृतीया-पञ्चमी-षष्ठी- सप्तमी-दशमी- एकादशी-द्वादशी- त्रयोदशी-पूर्णिमादि तिथिषु गृहारम्भः शुभाय भवति। भौम-रविवारं विहायान्येषु वारेषु गृहारम्भः करणीयः। यथा-

**द्वितीया पञ्चमी चैव तृतीया षष्ठिका तथा ।**
**सप्तमी दशमी चैव द्वादशैकादशी तथा।।**
**त्रयोदशी पञ्चदशी तिथयः स्युः शुभावहाः।**
**भौमार्करहिताः सर्वे वारास्स्युः शुभकारिका।।**[८]

**गृहारम्भे निषिद्धयोगाः -** वज्रत्याघातशूतव्यतीपात-अतिगण्ड-विष्कुम्भ-गदा-परिघेषु एतेषु अष्टयोगेषु गृहारम्भः निषिद्धः भवति। यथोक्तम् -

**वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः।**
**विष्कुम्भगण्डपरिघे चाष्टयोगे न कारयेत्।।**[९]

**गृहारम्भे लग्नादिविचारः -** कर्कलग्ने चन्द्रमा, केन्द्रे बृहस्पतिः, शेषग्रहाः स्वमित्रगृहे अथवा स्वोच्चांशे यदि भवन्ति तर्हि तत्काले निर्मितं गृहं लक्ष्मीयुतं भवति। गृहनिर्माणकाले ग्रहः यदि नीचराशौ

स्यात्तदा निर्धनता भवति। एकोऽपि ग्रहः दशमे सप्तमे वा स्थित्वा शत्रोः नवांशे यदि स्यात्तर्हि तद्गृहे वर्षाभ्यन्तरे अन्यस्याधिकारो भवति। तद्यथा -

**लग्नं कर्कटमाश्रिते हिमकरे देवर्चिते केन्द्रगे।**
**लक्ष्मीवद्भवनं खगैश्च सुहृदः स्वांशोच्चभागैस्तथा।।**
**नीचांशैरपि निर्धनं तु खचरोहैकः परांशस्थिते।**
**यामित्रे दशमेऽब्दमध्येत इदं गेहं परैर्नीयते।।**[१०]

मीनस्थ शुक्रः यदि लग्ने अथवा कर्कस्थ गुरुः चतुर्थे अथवा तुलायाः शनिः यदि एकादशे भवेत्तदा तद्गृहस्तदा धनयुक्तः भवति। तद्यथा -

**भृगुर्विलग्ने यदि मीनसंस्थः कर्के गुरुस्तुर्यगृहं गतं श्चेत्।**
**शनिस्तथैकादशगस्तुलायां गेहं चिरं श्रीसहितं तदा स्यात्।।** [११]

चरलग्ने, चरनवांशे, रिक्तातिथिषु रविभौमवासरे १, ८, १२, ६ स्थानेषु चन्द्रस्तथा अष्टमे यदि पापग्रहाः स्युस्तदा गृहकर्त्तायाः नाशो भवति। तद्यथा -

**चरलग्ने चरांशे वा रिक्तामारार्कवासरे।**
**अंगाष्टान्त्यरिगे चन्द्रे रन्ध्रे पापक्षयः प्रभोः।।** [१२]

शुभदिने, शुभतिथौ, शुभलग्ने, दोषवर्जितयोगे, अभीष्टदिशायां सुतिकायाः गृहारम्भः शुभं मन्यते। तद्यथा -

**वारेऽनुकूलेराशौ तु दिशेह्दोषविवर्जितो।**
**सानुकूले दिशिप्रोक्तं सूतिकाभवनं बुधैः।।**[१३]

गृहारम्भलग्नस्य शुभाशुभफलानिः- गृहारम्भकालिके लग्ने यदि पापग्रहाः ३,६,९,११ भावेषु तथा शुभग्रहाः ५,९,१,४,७,१० भावेषु स्युस्तदा गृहारम्भः शुभप्रदः भवति। तद्यथा-

**पापैस्त्रिषष्ठायगतैस्त्रिकोण केन्द्राश्रितैः साधुभिरालयस्य।**
**वदन्ति निर्माणमिहाष्टमस्थः क्रूरस्तुकर्तुर्मरणं करोति।।**[१४]

द्विस्वभावे स्थिरलग्ने शुभग्रहैः युक्ते दृष्टे च दशमस्थो बली शुभग्रहे भवननिर्माणं शुभं भवति। तद्यथा-

**द्व्यङ्गे स्थिते वा भवने विलग्ने सौम्यग्रहैर्युक्तनिरीक्षिते वा।**
**कर्मस्थितैर्वीर्ययुतैश्च सौम्ये निर्माणमाहुर्भवनस्य सन्तः।।**[१५]

सूर्यः गृहेशः, चन्द्रमा पत्नी, शुक्रः- धनम्, गुरुः सुखकारको भवति। यदि गृहारम्भकाले एते ग्रहोच्चस्थाः, बलीनः भवन्ति तर्हि शुभं तथा यदि एते नीचास्तङ्गताः, निर्वलाः स्युस्तदा हानिकारकाः भवन्ति। तद्यथा-

**रवौ गृहस्थो गृहिणी शशाङ्के धनं सिते देवगुरौ च सौख्यम्**
**विनाशमायाति बलेन हीने नीचस्थिते वास्तमुपागते च।।**[१६]

नक्षत्रग्रहयोगवशात् शुभाशुभफलानि - पुष्य, त्रिषूत्तराषु, श्लेषा, मृगशिरा, श्रवण, रोहिणी, पूर्वाषाढा प्रभृति नक्षत्रेषु कश्चिदेकस्मिन् नक्षत्रे यदि गुरुः स्यात्तर्हि गृहारम्भेण गृह चिरस्थायी तथा श्रियायुतं भवति। तद्यथा-

**ईज्योत्तरात्रयाहीन्दु विष्णुधातृजलाड्डुषु।**
**गुरुणा सहितेष्वेषु कृतं गृहं श्रिया युतम्।।**[१७]

एवमेव प्रकारेण सम्यक् रूपेण कालनिर्द्धारणं कृत्वा यदि गृहारम्भः भवेत्तदा अभिवृद्धिः गृहकर्त्त्रोस्तथा गृहस्याभिवृद्धिः भवति।

**सन्दर्भग्रन्थसूची :-**


१ तः ४- विश्वकर्मावास्तुशास्त्रम्- ३/१, ३/२, ३/४, ३/५-६।

५ तः ८- संग्रहशिरोमणिः-२०/२००, २०/२०१, २०/२०३, २०/२०४-२०५।

९- वास्तुरत्नाकरः- ९/३२

१०- बृहद्वास्तुमाला- पृ.-८३, श्लो.-११४

११- बृहद्वास्तुमाला- पृ.-८३, श्लो.-११५

१२ तः १७- संग्रहशिरोमणिः-२०/२०८, २०/२०९, २०/२१८,
२०/२१९, २०/२२१, २०/२२९


—०—


सहायकाचार्या, ज्योतिषविभागे,
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी

# आथर्वणज्योतिषे शालानिर्माणविधानम्

**-डॉ.ज्योतिप्रसाददाशः**

वेदस्य षडङ्गानि प्रसिद्धानि सन्ति। शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दः-ज्योतिषादीनि षडङ्गानि भवन्ति। वेदे प्रतिपादिताः मन्त्राः यज्ञयागनिमित्तं प्रवृत्ताः सन्ति। यज्ञयागादिकर्मणा विना कथं संसारस्य स्थितिः सुसंगठिता भवति तद्विषये सर्वेऽपि आचार्याः स्वस्वविचारानुरूपं मतानि यच्छन्ति। एवञ्च षडङ्गनियामकशास्त्राणां परिचर्चाऽपि कृता अस्ति। प्रसङ्गेऽस्मिन् ज्योतिर्जगति अद्वैतमार्तण्डः भास्कराचार्यः स्वकालजयी सिद्धान्तशिरोमणिग्रन्थे एवं प्रत्यपादि तद्यथा-

**वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्ता स्ते तु कालाश्रयेण।**
**शास्त्रदस्मात् कालबोधो यतः स्याद्वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्।।**
**शब्दशास्त्रं मुखं ज्यौतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पकरौ।**
**या तु शिक्षास्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः।।**
**वेदचक्षुः किलेदं स्मृतं ज्यौतिषं मुख्यता चाङ्गमध्येऽस्य तेनोच्यते।**
**संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीने न किञ्चित्करः।।**(१)

कर्णनासाद्यङ्गैः पूरितः सन् यदि चक्षुषाङ्गेन रहितः नरः विविधेषु कार्येषु अकिञ्चित्करः भवति तथैव चक्षुषाङ्गाभिव्यञ्जकशास्त्रस्याऽपि। वास्तुशास्त्रमपि वेदपुरुषस्य नेत्रोत्पन्नज्योतिषशास्त्रस्याभिन्नाङ्गकथने नास्ति काचित् विप्रतिपत्तिः। वेदः निखिलज्ञानतत्त्वस्याधारः। प्रसङ्गेऽस्मिन् भगवान् मनोः वचनम्-

**यः कश्चित् कस्यचित् धर्मो मनुना परिकीर्तितः।**
**स सर्वोभिहित वेदे सर्वज्ञानमयो हि सः।।**(२)

पाणिनीयव्याकरणे **वस-निवसने** (३) इत्यस्माद्धातोः **वसेस्तुन् वसेर्णिच्च** (४) इत्यनयोः सूत्रयोः वस् धातौ तुन् प्रत्यये कृते वास्तुशब्दः निष्पद्यते। निरूक्तकारस्य वचनानुसारं **"वास्तुर्वसतेर्निवासकर्मणः"**(५)।

द्युलोक-पृथ्वीलोकयोर्मध्ये वास्तोः स्थितिरिति वेदवचनम्। उक्तञ्चाथर्वसंहितायाम्-

**"अन्तरा द्यां च पृथिवीं च यद् व्यचस्तेन शालां प्रति गृहणामि त इमाम्।**
**यदन्तरिक्षं रजसो विमानं तत् कृण्वेऽहमुदरं शेवधिभ्यः।**
**तेन शालां प्रति गृहणामि तस्मै।''**(६)

पञ्चमहाभूतप्रभाविता इयं धरा। तस्मात् कारणात् वास्तोः प्रत्येकावयवोऽपि पञ्चमहाभूतैः प्रभावितः सन् सुनियन्त्रितो भवति। गृहस्थाश्रमे निवसतां जनानां कृते वास्तुशास्त्रस्य परमं प्रमुखञ्च प्रयोजनं भवति यत्– प्राणिनामाजीवनं स्त्रीपुत्रादिकसौख्यप्राप्त्यर्थं, धर्मार्थकाममोक्षादिपुरुषार्थचतुष्टयसाधननिमित्तं, शीताम्बुतापशमनार्थं, अनन्तफलप्राप्त्यर्थं च गृहनिर्माणं करोति मनुष्यः। इयं धरा प्रत्येकस्य जीवस्य कृते वर्तते। परन्तु मनुष्यः द्विपद-विवेकशीलप्राणित्वात् तस्य गृहनिर्माणे सः वास्तुशास्त्रीयनियमान् परिपालयति, स्वीयं सुखसमृद्धिप्राप्त्यर्थम्। गृहस्थानां याः याः क्रियाः भवन्ति ताः गृहं विना न सिद्ध्यन्तीति शास्त्रवचनम्। प्रसङ्गेऽस्मिन् वास्तुशास्त्रे इयमुक्तिः फलिताऽस्ति। तद्यथा-

**"गृहस्थस्य क्रियास्सर्वाः न सिध्यन्ति गृहं विना''**(७)।

तथा च - **स्त्रीपुत्रादिकभोगसौख्यजननं धर्मार्थकामप्रदं**
**जन्तूनामयनं सुखास्पदमिदं शीताम्बुघर्मापहम्।**
**वापीदेवगृहादिपुण्यमखिलं गेहात्समुत्पद्यते**
**गेहं पूर्वमुशन्ति तेन विबुधाः श्रीविश्वकर्मादयः।।**(८)

वास्तुशास्त्रे प्रतिपादितनियमानुसारं यदि भूचयनादारभ्य प्रतिष्ठाकर्मं यावत् सर्वेषां नियमानामनुपालनं स्यात्तदानीं तद्वास्तुः तत्र स्थितानां द्विपदचतुष्पदादिप्राणिनां कृते महते श्रेयसे भवतीति। गृहनिर्माणं कर्त्तुं भूचयनं कश्चनमहन्महत्वपूर्णावयवत्वेन कल्प्यते। यतोहि भूखण्डं विना गृहनिर्माणमसम्भवम्। तत्र भूचयनं कर्त्तुं वास्तुसारसंग्रहे प्रतिपादितनियमः यथा -

**स्फुटिता च सशल्या च वल्मीका रोहिणी तथा।**
**दूरतः परिवर्ज्येयं कर्तुरायुर्धनापहा।।**(९)

अर्थात् भूमिचयनावसरे स्फुटिता भूमिः, शल्ययुक्ता भूमिः, वल्मीका भूमिश्च सदैव वर्जनीया। यतो हि एतादृश्यां भूमौ गृहनिर्माणे वासकर्तुरायुधनहानिश्च भवति। प्रशस्ता भूमेरन्वेषणं कृत्वा वासस्थानस्य निर्माणं कर्तव्यम्। इयं भूमिः प्रशस्ता वर्तते इति कथं जानीमः ? उक्तञ्च वराहसंहितायाम् -

**शस्तौषधिद्रुमलता मधुरासुगन्धा**

**शस्ता समा न सुषिरा च मही नराणाम्।**

**अप्यध्वनि श्रमविनोदमुपागतानाम्**

**धत्तेश्रियं किमुत शास्वत मन्दिरेषु।।**(१०)

अर्थात् प्रशस्तौषधिवृक्षैः युक्ता, मधुरा, सुगन्धा, कोमला, छिद्ररहिता, पथिकानां श्रमविनोदयुक्ताभूमिश्च सदैव लक्ष्म्याः निवासः भवति। तत्र गृहनिर्माणे गृहकर्त्रोः सुखसमृद्धिः चिरं तिष्ठतीति वास्तुशास्त्रस्य वचनम्। वास्तुभूखण्डस्य चयनात्परं तस्य शुभाशुभत्वं शास्त्रे प्रतिपादितेषु विधिषु येन केनापि विधिना परीक्षणीयम्। शालानिर्माणार्थं नियमद्वयं मन्त्ररूपेण अथर्ववेदे यथा-

**"इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठति घृतमुक्षमाणा।**

**तां त्वा शाले सर्ववीराः सुविरा अरिष्टवीरा उप सं चरेम।।**

**इहैव ध्रुवा प्रति तिष्ठ शालेऽश्वावती गोमती सूनृतावती।**

**उर्जस्वती घृतवती पर्यस्वत्पुच्छ्रयस्व महते सौभगाय"।।**(११)

अर्थात् सुरक्षिते सुदृढे शान्तिप्रदे निर्भयस्थाने सन्माङ्गल्यदभूमौ एव गृहनिर्माणं कर्तव्यम्। ततः इयं प्रार्थना गृहकर्ता स्वभवननिर्माणावसरे करोति। तत्रोपरिप्रतिपादितमन्त्रार्थः तद्यथा- तस्मिन् गृहे आज्यस्य, भोज्यपदार्थानां सामग्रीणां तथा विविधसंसाधनानां पूर्णता स्यात्। अपि च सर्वविधशौर्यवीर्यादिभिः गुणैः युक्तः सन् सुखमयं जीवनं भवेदिति संप्रार्थ्य गृहस्य परिक्रमां करोति। पुनश्च गृहे येषां द्विपदचतुष्पदादि गृहपालितप्राणिनां निवासः भविष्यति तेषामारोग्यता, परस्परमिष्टभाषणं, घृतप्रभृतिदुग्धजातपदार्थानां पूर्णता तथा गृहस्थानां कृते सौभाग्यता प्राप्तिरस्तु इति प्रार्थयति गृहकर्ता।

अपि च - **"उर्जस्वती पयस्वती पृथिव्यां निर्मिता मिता।**

**विश्वान्नं बिभ्रती शाले मा हिंसीः प्रतिगृह्णतः"।।** (१२)

शालायाः सुप्रतिष्ठाहेतवेऽथर्ववेदे गृहाणां कृते स्थिरा दृढ़ा भूमिः यथा आवश्यकी तथैव गृहस्याधारभित्तिरपि सुदृढा स्यादिति काचिदुक्तिः यथा-

**" मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती"** (१३)।

शालायाः कृते हस्तिनीव पद्वती शब्दस्य विशेषणरूपेण प्रयोगः कृतः। अस्यायं भावः यत्-यथा हस्तिनी स्व स्तम्भाकारसुदृढैः पादैः स्वशरीरं वहति तथैव सुदृढाः स्तम्भाः गृहं रक्षन्वीति गृहपः प्रार्थयति। अथर्ववेदे न केवलं गृहाणां सुदृढाधारव्यवस्था निर्दिष्टा अपितु सुदृढस्तम्भानां व्यवहारेण भव्य-बहुतलप्रासादादीनां निर्माणमपि कर्त्तुं शक्यते इति समुल्लेखः प्राप्यते। वैदिककालेऽपि समुन्नतं इदं वास्तुविज्ञानम्। गृहनिर्माणस्थाने देवानां महत्ताविषये मन्त्रोऽयमथर्ववेदे मिलति। तद्यथा-

**“इमां शालां सविता वायुरिन्द्रो बृहस्पतिर्नि मिनोतु प्रजानम्’’।**[१४]

अर्थात् एतादृशि स्थाने वासस्थानस्य निर्माणं कर्तव्यं यत्र सूर्य-चन्द्र-वायु-इन्द्र-बृहस्पतिप्रभृतिदेवानां सहायकशक्तिः वैपुल्येन संप्राप्तिः स्यात्। तस्मिन् काले विशालकायभव्यप्रासादानां सहस्रस्तम्भत्वमपि बहुधा गदितम्। तथा च सुदृढस्तम्भवशात् बहुभौमिकानां प्रासादानां निर्माणं नगरवास्तुविज्ञानस्य स्वरूपमपि अभिव्यनक्ति।

**“कुलायेऽधि कुलायं कोशे कोशः समुब्जितः’’।**[१५]

ऋग्वेदेऽपि बहुतलप्रासादप्रसङ्गे त्रिभौमिकानां भव्यप्रसादानामुल्लेखः बहुषु स्थलेषु प्राप्यते। अद्यतने काले नगरेषु महानगरेषु च स्थानाभावात् जनाः बहुस्तम्भयुक्ता अनेकपर्वसमृद्धाः भवनानि आवासाय निर्मान्ति। तत्र एकभौमिकभवने बहुतलीयभवने च विविधप्रकोष्ठानां व्यवस्थाविषये अथर्ववेदीयवचनम् -

**या द्विपक्षा चतुष्पक्षा षट्पक्षा या निमीयते।**
**अष्टापक्षां दशपक्षां शालां मानस्य पत्नीमग्निर्गर्भ इवा शये।।**[१६]

अर्थात् यथोदरे गर्भः सुरक्षितस्तिष्ठति तथैव अस्य गृहस्याश्रयेऽहमपि सुरक्षितः स्थास्यामिति भावना। द्विपक्षादारभ्य दशपक्षपर्यन्तानां भवनानां निर्माणशैली सुदृढस्तम्भानामाधारेण कर्तव्यं भवति। शोधप्रबन्धस्यान्तिमपर्वणि तस्मिन् नवनिर्मिते सन्मङ्गलप्रदे गृहे सस्त्रीकः निवस्यमानः धर्मवीरः पुरुष अतिथिनां सत्कारमपि कुर्यादिति वेदः निर्दिशति। तत्र अतिथिनां सत्कारः भोजनादिकं परिवेषणकर्मणि च गृहे स्त्रीणामधिकारः वर्तते इति वेदवचनम्। उक्तञ्च -

**पूर्णं नारि प्र भर कुम्भमेतं घृतस्य धाराममृतेन संभृताम्।**
**इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः।।**[१७]

दिक्परत्वेन शालाविभागाः बृहद्वास्तुमालाग्रन्थानुसारं यथा -

**पूर्वस्यां श्रीगृहं प्रोक्तमाग्नेय्यां स्यान्महानसम्।**
**शयनं दक्षिणस्यां च नैर्ऋत्यामायुधाश्रयम्।।**
**भोजनं पश्चिमायां च वायव्यां धनसञ्चयम्।**
**उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम्।।**
**इन्द्राग्न्योर्मथनं मध्ये यमाग्न्योर्घृतमन्दिरम्।**
**यमराक्षसयोर्मध्ये पुरीषत्यागमन्दिरम्।।**
**राक्षसजलयोर्मध्ये विद्याभ्यासस्य मन्दिरम्।**
**तोयेशानिलयोर्मध्ये रोदनस्य च मन्दिरम्।।**
**कामोपभोगशमनं वायव्योत्तरयोर्गृहम्।**
**कौबेरेशानयोर्मध्ये चिकित्सामन्दिरं सदा।।**
**पुरन्दरेशयोर्मध्ये सर्ववस्तुषु संग्रहम्।**
**सदनं कारयेदेवं क्रमादुक्तानि षोडशः।।**[१८]

अर्थात् पूर्वस्यां दिशि श्रीगृहम्। आग्नेय्यां महानसम्(पाकशाला)। दक्षिणस्यां शयनम्। नैर्ऋत्याम् आयुधस्थानम्। पश्चिमायां दिशि भोजनम्। वायव्यकोणस्थितभवने धनसञ्चयम्। उत्तरस्यां दिशि द्रव्यसंस्थानं कार्यम्। ऐशान्यायां दिशि देवतागृहम्। पूर्वाग्निकोणयोर्मध्ये दधिमन्थनगृहम्। दक्षिणाग्निकोणयोर्मध्ये घृतमन्दिरम्। दक्षिण-नैर्ऋतयोर्मध्ये पुरीष(मल)त्यागमन्दिरम्। नैर्ऋत-पश्चिमयोर्मध्ये विद्याभ्यासस्य गृहम्। पश्चिम-वायव्योर्मध्ये रोदनस्य गृहम्। वायव्योत्तरयोर्मध्ये कामोपभोगशमनगृहम्। कौबेरेशानयोर्मध्ये चिकित्सामन्दिरं कार्यम्।

पुरन्दरेशयोर्मध्ये सर्ववस्तुसंग्रहालयः कार्य इति षोडशशालाविभागाः। इति दिक्।।

**सन्दर्भग्रन्थसूची-**

१) सिद्धान्तशिरोमणौ मध्यमाधिकारे कालमाने श्लोक सं.- ९,१० एवं ११
२) मनुस्मृतिः- २/७
३) सिद्धान्तकौमुद्याम् भ्वादिगणे

४) उणादिप्रकरणे सूत्र संख्या- ७५एवं ६७५
५) निरूक्ते- १०/२/१६
६) अथर्वसंहितायाम्-९/३/१५
७) वास्तुसौख्ये प्रतिपादितं भविष्यपुराणवचनम् श्लो. सं.-७
८) बृहद्वास्तुमालायाम्, गृहारम्भविधिः, श्लो. सं.-४ ।
९) वास्तुसारसंग्रहे तृतीयसोपाने(स्थानचयनं) श्लोक संख्या- ५
१०) बृहत्संहितायाम्, वास्तुविद्याध्यायः, श्लो.- ८८
११) अथर्वसंहितायाम् - तृतीयकाण्डे, द्वादशसूक्ते, मन्त्र संख्या- १ एवं २
१२) अथर्वसंहितायाम्-९/३/१६
१३) अथर्वसंहितायाम्-९/३/१७
१४) अथर्वसंहितायाम्-३/१२/४
१५) अथर्वसंहितायाम्-९/३/२०
१६) अथर्वसंहितायाम्-९/३/२१
१७) अथर्वसंहितायाम्-३/१२/८
१८) बृहद्वास्तुमालायाम्, दिक्परत्वेनगृहविभागाःश्लो.सं.- १५०-१५५

—०—

सहायकाचार्यः, ज्योतिषविभागे,
केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीसदाशिवपरिसरः, पुरी

# गृहमुहूर्त्तमेलापकविमर्शः

**-डॉ. श्रीनिवासपण्डा**

वास्तुशास्त्ररीत्या गृहमेलापकं नितान्तमावश्यकम्, यतो हि गृहस्थः गृहं विना कदापि पूर्णत्वं न गच्छति। वस्तुतश्चतुर्षु आश्रमेषु गृहस्थाश्रमस्य परिकल्पना गृहकारणादेव समुद्भुता। यदि गृहमेव न स्यात्तदास्याश्रमस्य परिपूर्तिरेव न भवति। यथोक्तमस्ति-

**गृहस्थस्य क्रियाः सर्वाः न सिद्ध्यन्ति गृहं विना।**
**यतस्तस्माद् गृहारम्भकर्मचात्राभिधीयते।।**(१)

आश्रमधर्मेषु द्वितीयाश्रमः गृहस्थाश्रमो भवति। गृहस्थाश्रमे देवपूजायाः विधानमस्ति। अत्र प्रतिवस्तुनि पिण्डे वा देवत्वस्य परिकल्पना एव हिन्दूसंस्कृतौ एका उदात्तभावना अस्ति। वास्तुशास्त्रस्य इदं वैशिष्ट्यमस्ति यदिदं शास्त्रं पृथिव्यादिपञ्चमहाभूतैः निर्मितायाः पृथिव्याः मानवजीवनस्य तैरेव महाभूतैः निर्मिते भवने वातावरणेन सह सामञ्जस्यस्थापनार्थं सर्वोच्चप्राथमिकता वर्त्तते। दर्शनस्य, विज्ञानस्य, कलायाः शिल्पस्य च महत्त्वमुपयोगिताञ्च सर्वाणि शास्त्राणि स्वीकुर्वन्ति यद् सर्वेऽपि प्राणिनः पञ्चमहाभूतैः विनिर्मिताः सन्ति। तेन मानवमात्रस्य शरीरं मनः जीवानां च एतेषां महाभूतानां सन्तुलनेन स्वतः सक्रियं भवति। अतः शास्त्रेऽस्मिन् मेलापकमपरिहार्यम्।

गृहनिर्माणस्य प्रारम्भः शुभमुहूर्ते कर्तव्यः। गृहस्वामिना पृच्छया निमित्तशकुनादिभिः सौख्यादिकं विचारं विधाय विद्वान् ज्योतिर्वित् परामर्शेन गृहारम्भस्य मुहूर्तो निष्कासितव्यः। कालपुरुषस्य यमङ्गं शुभग्रहः पूर्णदृष्ट्या पश्यति तमङ्गं स्पर्शं कृत्वा यदि प्रश्नकर्ता गृहपृच्छा कुर्यात् तदा, तदनुसारेण गृहनिर्माणकालः कथयितव्यः। देवोत्थाने अर्थात् जागृतवेलायामेव पुरप्रासादगृहाणाञ्च प्रारम्भः समाप्तिर्वा भवेदिति शास्त्रनिर्देशः। एतत्कर्मं भगवतः विष्णोः शयनकाले न करणीयम्। गृहारम्भस्यायमेव पक्षः (आषाढशुक्ल-एकादशीतः समारभ्य कार्तिकशुक्लदशमीपर्यन्तं देवशयनकालोऽस्ति) वास्तुरत्नाकरेऽपि कथितमस्ति।

**मासशुद्धिः** - प्राचीनाचार्यैः नूतनगृहारम्भकर्मणि विभिन्नमासेषु शुभाशुभफलं कथिकम्। गृहस्वामिनां सौख्यप्राप्त्यर्थं शास्त्रविहितशुभमासेषु गृहारम्भः कर्तव्यः। गृहारम्भो यदि चैत्रमासे क्रियते तदा शोकः, दुःखं पारिवारिककलहस्य च सम्भावना भवति। वैशाखे धनलाभो भवति। आषाढे पशुहरणं, वाहनादीनां नाशश्च जायते। श्रावणे पशुवृद्धिः, वैभववाहनादिवृद्धिर्भवति। भाद्रपदमासे गृहशून्यत्वं याति, केनापि कारणेन तस्मिन् निवासस्यासम्भवत्वं भवति। आश्विनमासे निर्माणारम्भात् पारिवारिकक्लेशः बान्धवेषु कलहश्च जायन्ते। कार्त्तिके नूतनगृहारम्भे दाम्पत्यजीवनं क्लेशमयं मृत्युशोकप्रदश्च सम्भाव्यते। मार्गशीर्षे धनधान्यं बहुधा समृद्धयश्च भवन्ति। पौषे गृहारम्भे जीवने क्रमिकविकासोऽन्नलाभयोगश्च भवति। माघे अग्निभयं व्यावसायिकधनहानिश्च जायते। फाल्गुने गृहारम्भकरणे सर्वदा धनप्राप्तियोगाः भवन्ति। यथोक्तं बृहद्वास्तुमालायाम् -

**चैत्रे शोककरं गृहादिरचितं स्यान्माधवेऽर्थप्रदं**
**ज्येष्ठे मुत्युकरं शुचौ पशुहरं तद्वृद्धिदं श्रावणे।**
**शून्यं भाद्रपदे त्विषे कलिकरं भृत्यक्षयं कार्तिके**
**धान्यं मार्गसहस्ययोर्दहनभिर्माघे श्रियं फाल्गुने।।**[२]

अस्मिन् सन्दर्भे वास्तुरत्नावल्यां किंचिद् भिन्नमतमस्ति। तस्य मतानुसारेण-

चैत्रे व्याधिभयम्, वैशाखे धनधान्यादिबृद्धिः, ज्येष्ठे मृत्युः, आषाढे भृत्यरत्नप्राप्तिः, श्रावणे मित्रलाभः, भाद्रपदि धनहानिः, आश्विने स्त्रीहानिः, कार्त्तिके धनधान्यलाभः, मार्गशीर्षे धनप्राप्तिः, पौषे चौरभयं, माघे अग्निभयं, फाल्गुने रत्नादीनां लाभः, चैत्रे शोकप्राप्तिर्भवति। यथोक्तं वास्तुरत्नावल्याम्-

**चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः।**
**वैशाखे धनरत्नानि ज्येष्ठे मृत्युस्तथैव च।।**
**आषाढ़े भृत्यरत्नं वै पशुवर्ज्यमवाप्नुयात्।**
**श्रावणे मित्रलाभन्तुं हानिर्भाद्रपदे तथा।।**
**भार्याहानिरिषे मासि कार्तिके धनधान्यकम्।**
**मार्गशीर्षे तथा वित्तं पौषे तस्करतो भयम्।।**

**लाभन्तु बहुशो विन्द्यादग्निं माघे विनिर्दिशेत्।**

**काञ्चनं फाल्गुने विन्द्यादितिमासफलं बुधैः।।**(३)

अनेन प्रकारेण प्रत्येकमासे गृहारम्भस्य शुभाशुभे काले सर्वेषां ग्रन्थकाराणामेकमतं नास्ति। अस्मिन्नेव सन्दर्भे शिल्पशास्त्रेऽपि लिखितम्-

**वैशाखे धनरत्नानि ज्येष्ठे मृत्युं विनिर्दिशेत्।**

**आषाढे धनलाभश्च पशुवृद्धिमवाप्नुयात्।।**

**श्रवणे भूमिलाभः स्याद्धानिर्भाद्रपदे तथा।**

**पत्नीनाशश्चाश्विने च बहुभार्याश्च कार्तिके।।**

**मार्गशीर्षे धनप्राप्तिः पौषे चौरभयं तथा।**

**अशुभं च भयं विद्यादग्निं माघे विनिर्दिशेत्।**

**फाल्गुने काञ्चनं पुत्रं चैत्रे च शोकवान् भवेत्।।**(४)

**मासमेलापकम्** - गृहारम्भाय वैशाखः, श्रावणः मार्गषीर्षः, फाल्गुनश्च मासोत्तमोऽस्ति। मतान्तरेण कार्तिकोऽपि च। यथोक्तं वास्तुसौख्ये -

**सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः।**

**मासाः स्युर्गृहनिर्माणे पुत्रारेग्यधनप्रदाः।।**(५)

अस्मिन् सन्दर्भे वास्तुरत्नाकारेणापि लिखितं यद् फाल्गुन-माघ-वैशाख-श्रावणाश्विन-कार्तिकमासेषु गृहनिर्माणारम्भे कृते पुत्र-पौत्र-धनादिवृद्धिदायकाः भवन्ति।

गृहप्रवेशस्य मासफलदृष्ट्या विचारः कर्तव्यः। मार्गशीर्षे कार्तिकमासे च गृहप्रवेशः सामान्यफलदायको भवति। माघे, फाल्गुने, वैशाखे, ज्येष्ठमासे चोत्तमफलदायको भवति। यथोक्तं वास्तुरत्नाकरे -

**प्रवेशे मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः।**

**प्रवेशनिर्णयः प्रोक्तः धिष्ण्ये वारे विनोद् गृहम्।।**(६)

माघमासे गृहप्रवेशे धनलाभः, फाल्गुने पुत्रधनलाभः, चैत्रे धनहानिः, वैशाखे धनधान्यालाभः, ज्येष्ठे पशुपुत्रलाभः, आषाढ-श्रावण-भाद्रपदाश्विन-पौषमासेषु गृहप्रवेशे हानिः शत्रुभयश्च भवति। यथोक्तं तत्रैव -

**माघेऽर्थलाभः प्रथमप्रवेशे पुत्राऽर्थलाभः खलु फाल्गुने च।**
**चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः।।**
**ज्येष्ठे च मासेषु परेषु नूनं हानिप्रदः शत्रुभयप्रदश्च।**
**शुक्ले च पक्षे सुतरां विवृद्ध्यै कृष्णे च यावद्दशमीं च तावत्।।**(७)

रामदैवज्ञेनापि गृहप्रवेशाय माघे, फाल्गुने, ज्येष्ठे, वैशाखे च एतेषु मासेषु उत्तरायणे सूर्ये गृहप्रवेशः शुभः कथितः। यथोक्तं मुहूर्तचिन्तामणौ-

**सौम्यायने ज्येष्ठतपोऽन्त्यमाधवे यात्रानिवृत्तौ नृपतेर्नवे गृहे।**
**स्याद् वेशनं द्वाः स्थमृदुध्रुवोडुभिर्जन्मर्क्षलग्नोपचयोदये स्थिरे।।**(८)

बृहद्वास्तुमालायामपि इत्थं वणितम्-

**विधाय पूर्वदिवसे वास्तुपूजां बलिक्रियाम्।**
**माघ-फाल्गुन-वैशाख-ज्येष्ठमासेषु शोभनः।।**
**प्रवेशो मध्ययो ज्ञेयः सौम्यकार्तिकमासयोः।**
**प्रवेशो निर्णयः प्रोक्तः शास्त्रज्ञः पूर्वसूरभिः।।**(९)

विश्वकर्मप्रकाशेऽपि मासफलानुसारेण गृहप्रवेश इत्थं वर्णितोऽस्ति।

**अथ प्रवेशो नवमन्दिरस्य सौम्यायने जीवसिते बलाढ्ये।**
**स्याद्वेशनं ज्येष्ठतपोऽन्त्यमाधवे मार्गे शुचौ मध्यफलप्रदं स्यात्।**
**माघेऽर्थलाभः प्रथमप्रवेशे पुत्रार्थ लाभः खलु फाल्गुने च।।**(१०)

मतान्तरे सौम्यायने मकरादिषड्राशिस्थे सूर्ये नवगृहप्रवेशः शुभफलदायको भवति। कुम्भस्य सूर्यं त्यक्त्वान्यमासेषु गृहप्रवेशः शुभप्रदो भवति, किन्तु सौरमासो गृहप्रवेशाय न गृहीतव्यः यथोक्तं वास्तुरत्नाकरे -

**मृगादिषड्राशिषु संस्थितेऽर्के नवप्रवेशः शुभदः सदैव।**
**कुम्भं विनाऽन्येष्वपि केचिदूचुर्न सौरमिष्टं खलु सन्निवेशे।।**(११)

नवीनगृहप्रवेशः (अपूर्वप्रवेशः) उत्तरायणे कर्तव्यः। यत्रानिवृत्तौ सपूर्वप्रवेशोऽपि उत्तरायणे शुभदो भवति। एवमेव द्वन्द्वात्मकः प्रवेशोऽप्युतरयणे कर्तव्यः। यथोक्तं बृहद्वास्तुमालायाम्-

**आदौ सौम्यायने कार्यं नववास्तु प्रवेशनम्।**

**राज्ञा यात्रानिवृत्तौ च यद्वाद्वन्द्वप्रवेशनम्।।**(१२)

**पक्षमेलापकः** - शुक्लपक्षे गृहारम्भे कृते सौख्यं कृष्णपक्षे च चौरभयं भवति। अतः शुभेच्छुना एतद् विचार्यैव गृहनिर्माणं कर्तव्यम्। यथोत्कं वास्तुरत्नाकरे-

**शुक्लपक्षे भवेत्सौख्यं कृष्णे तस्करतो भयम्।**

**तस्माद्विचार्य कर्तव्यं यदीच्छेच्छ्रियमात्मनः।।**(१३)

रिक्तातिथयः(चतुर्थी-नवमी-चतुर्दशी), अमावस्यां च परित्यज्य शेषेषु (प्रतिपदा-द्वितीया-तृतीया-पञ्चमी-अष्टमी-दशम्येकादशी-द्वादशी-त्रयोदशी-पूर्णिमा) तिथिषु दिने रात्रौ वा गृहप्रवेशः शुभाय भवति। यथोत्कं वास्तुरत्नाकरे-

**व्यर्कारवारतिथिषु रिक्तामावर्जितेषु च।**

**दिवा वा यदि वा रात्रौ प्रवेशो मङ्गलप्रदः।।**(१४)

**तिथिमेलापकः**- द्वितीया, पञ्चमी, तृतीया, षष्ठी, सप्तमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, पूर्णिमेत्येतास्तिथयो गृहारम्भे शुभफलदायकाः भवन्ति। प्रतिपदा दारिद्र्यं ददाति, चतुर्थी धनहानिं करोति, अष्टम्युच्चाटनं करोति, नवमी धान्यनाशं करोति, अमावस्या राजभयं ददाति तथा चतुर्दशी स्त्री-विनाशकर्त्री भवति। वास्तुसोख्ये -

**द्वितीया-पञ्चमीमुखास्तृतीया च कनिष्ठिका।**

**सप्तमी दशमी चैव द्वादश्येकादशी तथा।।**(१५)

अस्मिन् सन्दर्भे शिल्पशास्त्रकारस्य मतं किञ्चिद् भिन्नमस्ति। तदनुसारेण द्वितीया, सप्तमी, तृतीया, अष्टमी, त्रयोदशीतिथिषु च गृहनिर्माणं कर्तव्यम्। यथोक्तं शिल्पशास्त्रे-

**द्वितीय सप्तमी चैव तृतीयाष्ट त्रयोदशी।**

**पञ्चसु स्तम्भकर्माणि स्थिरलग्ने शुभे क्षणे।।**(१६)

**आदित्यभौमेज्यास्तु सर्वे वाराः शुभावहाः।।**(१७)

अस्मिन् सन्दर्भे वास्तुरत्नाकारस्यापि मतमस्ति-

**सौरेन्दजीवसौम्यानां भार्गवस्य च वासरे।**

**सूतपातादिकं कार्यमिष्टं समभिवाञ्छता।।**(१८)

भवनसम्बन्धिसम्पूर्णकृत्यं दिने एव करणीयम्। गुरुशूक्रयोरूदये शुक्लपक्षे दिवसे गृहारम्भः कर्तव्यः। यथोक्तं वास्तुत्नावल्याम् -

**गीर्वाणपूर्वगीर्वाणमन्त्रिणोर्दृश्यमानयोः।**

**शुक्लपक्षे दिवा कार्यं न निर्माणं तु रात्रिषु।।**(१९)

वास्तुरत्नावल्यामुक्तमस्ति यत्- मानवः स्वसमृद्ध्यर्थं सदा शुक्लपक्षे एव प्रवेशो श्रेष्ठः कथितः कृष्णपक्षेऽपि दशमीं यावत् गृहप्रवेशः कर्तव्यः। यथोक्तं वास्तुरत्नावल्याम् -

**शुक्ले च पक्षे सुतरां विवृद्ध्यै कृष्णे च यावद्दशमीं च तावत्।**(२०)

विश्वकर्माप्रकाशेऽपि रिक्तातिथिं विहाय गृहप्रवेशः शुभप्रदः कथितः। यथोक्तम् -

**रिक्तातिथौ भौमवारे शनिवारे च नैव कारयेत्।** (२१)

शुक्लपक्षस्य प्रतिपत्तिथिः गृहप्रवेशाय दोषप्रदत्वेन गणिता। उक्तञ्च मुहूर्ततत्त्वे-

**अमावस्या च षष्ठी च रिक्ता शुक्लपस्य पक्षतः।**

**अष्टमी सम्मुखः शुक्रो वर्जनीया प्रवेशके।।** (२२)

**वारमेलापकः** - रवि-भौमवारौ विहाय सोम-बुध-गुरु-शुक्र-शनिवारेषु गृहप्रवेशः शुभदः। परन्तु मतान्तरे शनि-भौमवासरौ त्यक्त्वा गृहप्रवेशः शुभाय भवति। यथोक्तं विश्वकर्मप्रकाशे, मुहूर्त्ततत्त्वे च -

**रिक्तां सूर्यकुजौ विहाय च कुहूं वेश्मप्रवेशः शुभः।** (२३)

**नक्षत्रमेलापकः**- चित्रा-उत्तरात्रय-रोहिणी-मृगशिरा-अनुराधा-धनिष्ठा-शतभिषा नक्षत्रेषु समृद्धिः प्राप्यते। यथोक्तं बृहद्वास्तुमालायाम्-

**चित्रोत्तराधातृशशङ्कमित्रवस्वन्त्यवारीश्वरभेषु नूनम्।**

**आयुर्धनारोग्यसुपुत्रपौत्रसुकीर्तिदः स्यात्त्रिविधः प्रवेशः।।**(२४)

विश्वकर्मप्रकाशग्रन्थानुसारेण मृदुः (मृगशिर-चित्रा-अनुराधा-रेवती नक्षत्रेषु) ध्रुवसंज्ञकः (उत्तराफाल्गुनी-उत्तराषाढा-उत्राभाद्रपद-रोहिणी) नक्षत्रेषु तथा च पुष्य-स्वात्यां नूतनगृहप्रवेशः, एतेषु सर्वेषु नक्षत्रेषु शुभफलदायको भवति। यथोक्तं विश्वकर्मप्रकाशे-

**मृदुध्रुवर्क्षे शुभदं नववेमप्रवेशनम्।**

**पुष्यस्वातीवृतैस्तैश्च जीर्णे स्याद्वासवद्वये।।** (२५)

गृहारम्भे चित्रानुराधा-मृगशिरा-रेवती-पुष्योत्तराषाढोत्तराफाल्गुन्युत्तराभाद्रपदा-रोहिणी-धनिष्ठा-शतभिषानक्षत्रेषु गृहारम्भः शुभदो भवति। महर्षिपाराशरमतेन। चित्रा-शतभिषा-स्वाती-हस्त-पुष्य-पुर्नवसु-रोहिणी-रेवती-मूल-श्रवणोत्तराफाल्गुनी-धनिष्ठोत्तराषाढाश्विनी-मृगशिरा-अनुराधा-चित्रानक्षत्रेषु गृहारम्भावसरे वास्तुपूजनं क्रियते तदा लक्ष्म्याः प्राप्तिर्भवति। यथोक्तं बृहद्वास्तुमालायाम्-

**चित्राशतभिषक्स्वाती हस्तः पुष्यः पुनर्वसुः।**

**रोहिणी रेवतीमूल-श्रवणोत्तरफाल्गुनी।।**

**धनिष्ठा चोत्तराषाढा तथा भाद्रोत्तरान्विता।**

**अश्विनीमृगशीर्षेद्वे अनुराधा तथैव च।।**

**वास्तुपूजनमेतेषु नक्षत्रेषु करोति यः।**

**समाप्नोति नरो लक्ष्मीमिति प्राह पराशरः।।**(२६)

अस्मिन् सन्दर्भे विश्वकर्मप्रकाशेऽपि वर्णितं यथा-

**मृदुध्रुवस्वातिपुष्यधनिष्ठाद्वितये रवौ।**

**मूले पुनर्वसौ सौम्यवारे प्रारम्भणं शुभम्।।** (२७)

अस्मिन्नेव सन्दर्भे शिल्पकारेण लिखितम्-

**अश्विनी रोहिणी मूला ह्युत्तरात्रयमेव च।**

**स्वाती हस्तानुराधासु स्तम्भारम्भः प्रशस्यते।।**(२८)

**योगकरणयोर्मेलापकम्** - वज्रव्याघातशूलव्यतीपातातिगण्डविष्कुम्भगण्डपरिघादिषु योगेषु गृहरम्भो नैव करणीयः। शेषेषु योगेषु गृहारम्भः श्रेष्ठो भवति। यथोक्तं मत्स्यपुराणे-

**वर्ज्यं व्याघातशूले च व्यतीपातातिगण्डयोः।**

**विष्कुम्भगण्डपरिघवज्रयोगे न कारयेत्।।** (२९)

वास्तुराजवल्लभानुसारेण वैधृतिशूलगण्डपरिघव्याघातवज्रादियोगान् विहायान्येषु योगेषु वास्तुकर्मः शुभदः भवति। तद्यथा-

**नेष्टौ भूसुतभास्करौ च शुभदा पूर्णा च नन्दा तिथौ।**
**नेष्टा वैधृतिशूलगण्डपरिघः व्याघातवज्रावपि।।**(३०)

मत्स्यपुराणानुसारेण वज्रः, व्याघातः, शूलः, व्यतिपातः, अतिगण्डः, विष्कुम्भः, गण्डः, परिघश्च इत्यष्ट योगाः वर्जिताः अयोग्याश्च सन्ति। एतेषु योगेषु गृहनिर्माणं नैव करणीयम्। तद्यथा वास्तुरत्नाकरे-

**वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः।**
**विष्कुम्भगण्डपरिघे चाष्टयोगे न कारयेत्।।** (३१)

**वास्तुमेलापके विचारणीयाः एकविंशति महादोषाः** - १. पञ्चाङ्गशुद्धिः, २. उदयास्तशुद्धिः, ३. सूर्यसंक्रान्तयः, ४. पापग्रहाणां षड्वर्गाः, ५. गण्डान्तम्, ६. लग्नात् षष्ठः शुक्रः, ७. अष्टमस्थो भौमः, ८. लग्ननक्षत्रम्, ९. तिथिः, १०. कर्तरि योगः(६-८-१२), ११. सग्रहो भावे स्थितश्चन्द्रः, १२. जन्मलग्नात् जन्मराशेश्चाष्टमराशेर्लग्नम्, १३. विषघटीः, १४. दुर्मुहूर्त्तम्, १५. वारदोषाः, १६. खार्जूरम्, १७. ग्रहणस्योत्पातस्य च नक्षत्रम्, १८. क्रूरग्रहे विद्धयुक्तं च नक्षत्रम्, १९. पापग्रहाणां नवांशम्, २०. महापातः, २१. वैधृतिरिति एकविंशति महादोषाः सन्ति। यथोक्तं वास्तुरत्नाकरे-

**पञ्चाङ्गशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः।**
**उदयास्तशुद्धिरहितो द्वितीयः सूर्यसंक्रमः।।**
**तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः।**
**गण्डान्तं कर्तरी रिष्फषडष्टेन्दुश्च सग्रहः।।**
**दम्पत्योरष्टमं लग्नं राशेर्विषघटी तथा।**
**दुर्मुहूर्तो वारदोषः खार्जूरिकसमाङ्घ्रिभम्।।**
**ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम्।**
**कुनवांसो महापातो वैधृतिश्चैकविंशति।।**(३२)

**गृहप्रवेशमेलापकम्** - गृहनिर्माणपूर्तौ विधिविधानेन वास्तोः पूजनादिकं विधाय गृहस्वामिनो स्व नवनिर्मितभवनस्य प्रवेशरेव गृहप्रवेशेति लोकोक्तिः। वास्तुशास्त्रानुसारेण गृहनिर्माणप्रारम्भकाले मास-पक्ष-तिथि-नक्षत्र-योग-लग्नादीनां शुद्धयः विधातव्याः। गृहस्वामी यद्यपि गृहनिर्माणकाले निर्माणाधीनगृहे अनेकवारं प्रविशति, तथापि गृहनिर्माणविधिं समाप्य स्थायीरूपेण वासकर्ता शास्त्रानुसारेण सपरिवारं गृहे प्रवेशं यदा करोति तदेव गृहप्रवेशरिति कथ्यते।

गृहप्रवेशकाले विभिन्नदेवतानां सन्तुष्ट्यर्थं गृहे ये अदृश्यमानाः देवस्वरूपाः विराजमानाः भवन्ति तेषां सर्वेषां प्रसन्नार्थं वास्तुपूजनमावश्यकं भवति। गृहदेवानां सन्तुष्टिस्तु यजमानस्य सन्मङ्गलाय भवति। गृहनिर्माणसमये वास्तुनि ये दोषाः यदा कदा भवन्ति तेषां प्रशान्तये वास्तुपूजनं नितरां परमावश्यकम्। तेन गृहस्वामी सुखपूर्वकं स्व नवनिर्मिते वास्तुनि वसति। वास्तुग्रन्थेषु गृहप्रवेशस्य त्रिविधः प्रकारो दृश्यते -

**१. अपूर्वगृहप्रवेशः**- निवासाय, व्यवसायाय, अन्यकार्याय वा निर्मितेऽभिनवे गृहे प्रथमप्रवेशः अपूर्वगृहप्रवेशः इत्युच्यते। यद्यपि गृहनिर्माणकाले गृहपतिः कार्यस्य समीक्षार्थं वारं वारं गृहं प्रविशति तथापि गृहकार्यसमाप्तये शास्त्रानुमोदिते शुभमुहूर्ते अवश्यं गृहप्रवेशं वास्तुपूजनं च कर्तव्यम्। एतादृशः प्रवेशोऽपूर्वगृहप्रवेशः। वस्तुतः नूतनगृहप्रवेशस्तु अपूर्वसंज्ञकप्रवेशेति।

**२.सपूर्वगृहप्रवेशः**- प्रविष्टे गृहे बहुकालावधानात् पुनः प्रवेशः। दीर्घकालेन यात्रासमाप्त्यनन्तरं स्व गृहे प्रवेशः सपूर्वप्रवेशेति कथ्यते।

**३. द्वन्द्वगृहप्रवेशः** - दैविक-भौतिक-राजनैतिककोपजनिते भग्नगृहे परिष्कारानन्तरं पुनः प्रवेशः द्वन्द्वगृहप्रवेशेति।

अत्रोपर्युक्तत्रिविधगृहप्रवेशस्य वर्णनं वास्तुरत्नाकरे, बृहद्वास्तुमालायामपि विद्यते। तद्यथा-

**अपूर्वसंज्ञं प्रथमप्रवेशं यत्रावसाने च स पूर्वसंज्ञम्।**
**द्वन्द्वाह्वयश्चाग्निभयादिजातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्टः।।** [३३]

दिवसे अथवा रात्रौ यदा गृहप्रवेशस्य मुहूर्तः भवति तदेव ज्ञापयति दैवज्ञः। तस्मिन् मुहूर्ते एव गृहप्रवेशः कर्तव्यः। प्रवेशकर्मणि निषेधता बृहद्वास्तुमालायाम्-

**वधूप्रवेशो न दिवा प्रशस्तः राजप्रवेशो न निशि प्रशस्तः।**

**दिवा च रात्रौ च गृहप्रवेशः सत्कीर्तिदस्स्यात्त्रिविधिः प्रवेशः।।** (३४)

**गृहप्रवेशे वामरविविचारः** - पूर्वाभिमुखे गृहे प्रवेशलग्नात् अष्टमस्थानं, दक्षिणाभिमुखे गृहे प्रवेशलग्नात् पञ्चमस्थानं, पश्चिमाभिमुखे गृहे प्रवेशलग्नात् द्वितीयस्थानं तथा उत्तराभिमुखे भवने प्रवेशलग्नात् एकादशस्थानराशितः पञ्चमराशिपर्यन्तं सूर्यस्य स्थितिः भवति चेत् तादृशः सूर्यः वामरविरिति वास्तुशास्त्रकाराः। तत्र तिथीनां नन्दादि भेदेन गृहप्रवेशकर्मणि शुभाशुभता यथा -

नन्दातिथौ (१-६-११) दक्षिणाभिमुखं, भद्रातिथौ (२-७-१२) पश्चिमाभिमुखं, जयातिथौ(३-८-१३) उत्तराभिमुखं, पूर्णातिथौ (५-१-१५) पूर्वाभिमुखगृहस्य प्रवेशः शुभाय भवति। रिक्तातिथौ(४-९-१४) प्रवेशः कदापि न शुभाय भवति। यथोक्तं मुहूर्तचिन्तामणौ -

**वामो रविर्मृत्युसुतार्थलाभतोऽर्के पञ्चमे प्राग्वदनादिमन्दिरे।** (३५)

पूर्वाभिमुखद्वारगृहे पुर्णासंज्ञकासु तिथिषु (पञ्चमीदशमीपञ्चदशीतिथिषु) दक्षिणाभिमुखद्वारगृहे नन्दासंज्ञकासु तिथिषु (प्रातिपद्षष्ठेकादशीतिथिषु) तृतीयाष्टमीत्रयोदशीतिथिषु च गृहप्रवेशः श्रेष्ठो भवति।

**तत्र कुम्भचक्रविचारः** - गृहप्रवेशकाले कुम्भचक्रेण शुभाशुभनिर्णयं विधाय गृहप्रवेशः कर्तव्यः। गृहप्रवेशसमये नक्षत्रशुद्ध्यर्थं कुम्भचक्रमुपयुज्यते। गृहप्रवेशकाले सुर्यः यस्मिन् नक्षत्रे स्यात्तन्नक्षत्रं कुम्भचक्रस्य मुखे विद्यमानतत्वात् अग्निभयं सूचयति। अनन्तरं चत्वारि नक्षत्रणि चक्रस्य प्रच्यां दिशि वर्तन्ते। अतः तानि उद्वेगप्रदायकानि अशुभानि च भवन्ति। ततः अग्रिमचत्वारि भानि दक्षिणदशि लाभप्रदानि, तदनन्तरं चत्वारि नक्षत्राणि पश्चिमे लक्ष्मीप्रदानि अनन्तरं चत्वारि नक्षत्राणि गर्भे अशुभानि भवन्ति। ततः परं त्रीणि नक्षत्राणि अधोभागे स्थिरप्रदानि च भवन्ति च भवन्ति। यथोक्तं मुहूर्त्तचिन्तामणौ -

**वक्त्रे भूरविभात् प्रवेशसमये कुम्भेऽग्निदाहः कृताः**
**प्रच्यामुद्वसनं कृता यमगता लाभ कृताः पश्चिमे।**
**श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे**
**रामाः स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत् सर्वदा।।** (३६)

**सारांशः -**

अर्वाचीने वैज्ञानिकयुगेऽपि सर्वेषां जनानां कृते वास्तुशास्त्रनिर्दिष्टनियमानुसारेण गृहनिर्माणस्यावश्यकता वर्तते। जनाः नूतननिर्मितगृहेषु चिरकालपर्यन्तं सुखेन उषितुमिच्छन्ति। अतो जनहिताय शास्त्रस्याध्ययनमनिवार्यमस्ति।

**सन्दर्भाः-**

१. वास्तुसारः- १/८,९,११
२. बृहद्वास्तुमाला पृ.सं. -६६-६७/४९
३. वास्तुरत्नावली- पृ.८१
४. शिल्पशास्त्रम्- १/२२-२४
५. वास्तुरत्नाकर- ९/३८१
६. वास्तुरत्नकर- १०३/५०२
७. वास्तुरत्नकरः- १०/५-६
८. मुहूर्तचिन्तामणिः-१३/१
९. बृहद्वास्तुमाला- १०३/४-५
१०. विश्वकर्मप्रकाशः- १०/१
११.वास्तुरत्नाकरः- १०/७
१२. बृहद्वास्तुमाला- १०३/३
१३. वास्तुरत्नाकरः- ९/२२
१४. वास्तुरत्नाकरः- १०/४
१५. वास्तुरत्नाकरः-९/२८
१६. शिल्पशास्त्रम्- १/२८
१७. मस्त्यपुरणम्-२५३/७
१८. वास्तुरत्नरकरः-९/२६
१९. वास्तुसौख्यम्-९/४०५
२० वास्तुरत्नवली-पृ.१६४
२१. मुहूर्त्ततत्त्वम्- पृ.७७
२२. विश्वकर्मप्रकाशः- १०/१८
२३. मुहूर्ततत्त्वम्-पृ. ७७
२४. बृहद्वास्तुमाला-१०४/८
२५. विश्वकर्मप्रकाशः-१०/१६
२६. बृहद्वास्तुमाला-पृ.सं-७३,श्लोक सं. ७१

२७. विश्वकर्मप्रकाशः-३/२
२८. शिल्पशास्त्रम्-१/३३
२९. मत्स्यपुरणम्-२५४/३
३०. वास्तुरत्नाकरः-११/१५१/२
३१. वास्तुरत्नाकरः-९/३२
३२. वास्तुरत्नाकरः-९/९३-९६
३३. वास्तुरत्नाकरः- १०/१
३४.वृहद्वास्तुमाला-१०३/०२
३५.मुहीर्तचिन्तामणिः-१३/५
३६.मुहीर्तचिन्तामणिः-१३/

—०—

सहायकाचार्यः, ज्योतिर्विज्ञानविभागः
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः,
श्रीविहारः पुरी-७५२००३

# वास्तुशास्त्रीयमेलापकस्य वैज्ञानिकत्वम्

**-डॉ. मधुसूदनमिश्रः**

वास्तुशब्दस्य निर्वचनं भगवता यास्काचार्येणोक्तं यथा - **वास्तुर्वसतेर्निवासकर्मणः** इति। पाणिनीयव्याकरणस्य वस् निवासे इत्यस्माद्धातोः **वसेस्तुन् णिच्च** इति सूत्रेण च वस् धातौ तुन् प्रत्यये कृते सति वस्तुशब्दो निष्पद्यते। णित्वादादिवृद्धिश्च जायते, तेन वास्तु इति शब्दो निष्पद्यते। तस्य च वास्तोः पतिः पालयिता वा। वास्तोष्पतिरिति वैदिको देवविशेषः। वास्तुशब्दस्यार्थो भवति वासयोग्यं यत् स्थानं तद्वास्त्विति। अस्य वासयोग्यस्य स्थानस्यावश्यकता सर्वेभ्योऽपि देव-दानव-मानव-पशु-पक्षि-कृमि-कीट-पतङ्ग-पिपीलिका-लता-गुल्म-वृक्ष-वनस्पत्यौषधादिभ्यः वर्तत एव। यतस्तु यत्र यो वसति तदेव तस्य वास्तुः। शब्दकल्पद्रुमे तु वसन्ति प्राणिनो यत्रेत्यस्मिन्नर्थे **वसेरगारे णिच्** (१) **इत्यनेन सूत्रेण निष्पन्नोऽयं** वास्तुशब्दः। वास्तुशास्त्रस्य अपरं नाम **विश्वकर्मशास्त्रम्, स्थापत्यशास्त्रम् शिल्पशास्त्रमपि** यत्र तत्र ग्रन्थेषु दृष्टिपथं समायाति।

वास्तुशास्त्रस्य प्रवर्त्तनपरम्परायां द्विविधा परम्परा प्राप्यते। तत्र प्रथमपरम्परायाः प्रवर्त्तकः विश्वकर्मा वर्तते। द्वितीयपरम्परायाः प्रवर्त्तकः मयो वर्तते। मस्त्यपुराणे प्रतिपादितमस्ति यत् भृगुरादय अष्टादशाचार्या अस्य शास्त्रस्य प्रवर्तका आसन्। मस्त्यपुराणे तथा हि-

**भृगुरत्रिर्वशिष्ठश्च विश्वकर्मामयस्तथा।**
**नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः।**
**ब्रह्माकुमारो नन्दीशः शौनको गर्ग एव च।**
**वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती।।**
**अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः।** (२)

मयमतानुगुणं मानसारनुकूलञ्च अत्र एतेषां संख्या ३२ वर्तते। तथा हि -

**विश्वकर्मा च विश्वेशः विश्वसारः प्रबोधकः।**
**वृतश्चैव मयश्चैव त्वष्टा चैव मनुर्नलः।।**
**मानविन्मानकल्पश्च मानसारो बहुश्रुतः।**
**प्रष्टा च मानबोधश्च विश्वबोधो नयस्तथा।।**

**आदिसारो विशालश्च विश्वकाश्यपश्चैव च।**
**वास्तुबोधो महातन्त्रो वास्तुविद्यापतिस्तथा।**
**पाराशरीयकश्चैव कालयूपो महर्षिचै-**
**त्याख्यः चित्रकश्चावर्यः साधकसारसंहितः।।**
**भानुश्चेन्द्रश्च लोकज्ञः सौराख्यः शिल्पिवित्तमः।**
**त एव ऋषयः प्रोक्ता द्वात्रिंशतिः संख्यया।।**[३]

वास्तुशास्त्रेदं वैशिष्ट्यमस्ति यदिदं शास्त्रं पृथिव्यादिमपञ्चमहाभूतैः निर्मितायाः पृथिव्याः मानवजीवनस्य तैरेव महाभूतैः निर्मितेन भवनेन वातावरणेन सह सामञ्जस्यस्थापनार्थं यतते।

**वास्तुशास्त्रस्य प्राकृतिकमेलापकत्वम्**

वास्तुशास्त्रे प्रकृतस्वरूपमेव ऋषीणां ध्येयमासीत् प्राणिमात्रस्य शरीरं पाञ्चभौतिकं किञ्च ब्रह्माण्डोऽपि पाञ्चभौतिकं विद्यते। तत्र च क्रमेण भूः, जलं, तेजः, वायुः, आकाशः इति क्रमेण उत्तरोत्तरं न्यूनं जायते। अस्माकं भौतिके वासेऽपि क्रमेण एतेषां न्यूनता विद्यते। वस्तुतः इयं भूमिः अस्माकं जीवनस्याहारविहारविश्रामादीनां सर्वासां गतिविधीनां मुख्याधारा। भुवं विना न भवति आवासस्य कल्पनम्। कल्पनायाः आधारः भूरेव। पृथिव्याः विशेषतेयं वर्तते यदियं गुरुत्वशक्तेश्चुम्बकीयशक्तेश्च केन्द्रमस्ति। भूमे इमे शक्ती षष्ट्यधिकचतुश्शतकोटिवर्षैः स्वकक्षायां सततरूपेण स्वाक्षभ्रमणेन लब्धे। यदि भूमौ उभयोः शक्त्योरभावः तर्हि भवननिर्माणं व्यर्थम् असम्भवञ्च। सम्पूर्णब्रह्माण्डमेकं चुम्बकीयक्षेत्रं ब्रह्माण्डस्य सर्वेऽपि ग्रहतारकादयः चुम्बकीयतरङ्गैः पारम्परिकरूपेणाबद्धाः। इयं प्रकृतिः स्वकीयशक्त्या समग्रब्रह्माण्डस्य सञ्चालनं नियन्त्रणं च विदधाति। पृथिव्यास्स्वाक्षोपरिसततभ्रणेन स्वीया चुम्बकीया शक्तिः प्रभाविता।

चुम्बकस्य द्वौ ध्रुवौ भवतः। उत्तरध्रुवः, दक्षिणध्रुवश्च। तथैव भूमेरपि ध्रवद्वयं विद्यते। तत्र च द्वयोः चुम्बकयोः विजातीयध्रुवयोः आकर्षणं सजातीयध्रुवयोर्विर्षणञ्च भवति। चुम्बकीया-कर्षणविकर्षणाभ्यां यदा ब्रह्माण्डे गतिविधयः प्रसिद्धाः तदाऽस्माकं जीवनस्य सर्वेऽपि गतिविधयः प्रभाविताः। किञ्च यथा धरित्र्याः द्वौ ध्रुवौ तथैवाऽस्माकं शरीरे द्वौ ध्रुवौ भवतः। शिरःप्रदेशे उत्तरध्रुवः, पादप्रदेशे दक्षिणध्रुवश्च। अनेन स्नायुन्त्रस्य रक्तसञ्चारप्रक्रिया लाभान्विता भवति। भुवः गुरुत्वशक्तेः फलमिदं यदियमन्तरिक्षेण सह गतिशून्यता त्याज्य स्वीयतलेऽस्माकं जीवनं गतिशीलं विधत्ते।

वास्तुशास्त्रे भवननिर्माणे भूपरीक्षणं, स्थलपरीक्षणं, परिमापनं, जलपरीक्षणं तथा चानैकविधपरीक्षणं पूर्व विधेयम्। भूमेः प्लवत्त्वस्य, शल्योद्धारस्य, भूखण्डचयनस्य, तदाकाशस्य विस्तारस्य तत्समीपवर्तिमार्गस्य वेधादिकस्य च विचारः सूक्ष्मेक्षिकया विधीयते। पञ्चभूतानां समुचितप्रभावेण गृहं स्वस्य निर्दिष्टकाले एव नष्टो भवति। अग्नितत्वेन दाहकत्वभयम्, वायुतत्वेन रोगाः, आकाशतत्वेन परगृहशून्यत्वं भवति। तद्यथा राजवल्लभवास्तुशास्त्रे -

**पृथिव्यापोऽनलो वायुराकाशमिति पञ्चभिः।**
**गृहस्यायुषि सम्पूर्णे विनाशो भवति ध्रुवम्।।**
**जीर्णं पतति भूतत्वे तोयाग्न्योः स्यात्तदुद्भवम्।**
**वायौ रोगस्तथाऽऽकाशे शून्यतामेति मन्दिरम्।।** [४]

प्रकृतिप्रदत्तेषु तत्त्वेषु कस्याप्येकस्याभावश्चेत्तर्हि न कदापि भूमौ गृहस्य विचारः कर्तुं शक्यते। अस्माकमावासे सर्वविधसौलभ्याय मुख्यतया भूमिरापोतेजोवायुश्चैतेषां चतुर्विधतत्वानामुपयोगः मुख्यतया क्रियते। एतेषां चतुर्णां तत्त्वानां सामञ्जस्येन निर्मिते भवने पाञ्चभौतिकदेहिनां सामर्थ्यं संवर्द्धते।

**(१) वास्तुशास्त्रदृष्ट्या मेलापकविमर्शः**

अत्रेदमवधेयं यत् विवाहमेलापकदेव मेलापकविचारः तद्वदेव च शुभाशुभफलमपि विचार्यते। वास्तुरत्नाकरे च -

**कार्या धिष्ण्यगृहेशगृहयोरूद्वाहवत्कल्पना।**[५]

राजवल्लभमण्डने तु गणितरीत्या गृहनक्षत्रमेलापकविचारे प्रोक्तमस्ति यत्-गृहनक्षत्राद् गृहस्वामिनक्षत्रपर्यन्तं गणना कर्त्तव्या। प्राप्ताङ्के नवभिर्भाजिते सति शेषसंख्या तारा भवति। गृहमेलापके तृतीया पञ्चमी सप्तमी च ताराकाः त्याज्याः भवन्ति। तद्धि-

**यावद् ग्रहर्क्षं गणयेत् स्वधिष्णयात् तारा विभक्ते नवभिश्च शेषाः।**
**बुधैस्तृतीया सकले विवर्ज्या या पञ्चमी सप्तमिका न शस्ता।।**[६]

आयादीनां ज्ञानेऽपि नाक्षत्रमेलापकमेव प्रयुज्यते। तत्र क्षेत्रफलमष्टभिस्सङ्गुण्य गुणनफले सप्तविंशतिभाजिते नक्षत्रसंख्या भवति तस्मिन् पुनरष्टभिर्भाजिते व्ययज्ञानं भवति। तद्यथा-

**अष्टघ्ने तद्गुणिते च धिष्ण्यभाजिते स्यादृक्षमश्वादिकम्।**

**नक्षत्रे वसुभिर्व्ययो विभजते हीनस्तु लक्ष्मीप्रदः।।** [७]

मुहूर्त्तचिन्तामणौ नक्षत्रमेलापकविषये निगदितमाचार्येण यत् गृहस्वामिनक्षत्रयोरेकत्वं मरणदम्। तद्यथा-

**गृहेशर्क्षं गृहभैक्यं मृतिप्रदम्।।**[८]

आचार्यवसिष्ठेनापि-

**गृहस्य तत्पतेस्त्वेकं धिष्ण्यं चेन्निधनप्रदम्।।** [९]

वस्तुतः राश्यैक्येऽयं दोषो भवति परन्तु पादभेदे नक्षत्रदोषस्य शमनमपि भवति। नक्षत्रमेलापकाय कृत्तिकातो यथाक्रमं त्रीणि-त्रीणि नक्षत्राणि सप्तस्थाने न्यस्तानि। तदुक्तमस्ति वास्तुरत्नाकरे-

**त्रिभिस्त्रिभिर्वेश्मनि कृतिकाद्यैरूद्वेगपुत्राप्तिधनाप्तिशोकम्।**

**शत्रोर्भयं राजभयञ्च मृत्युः सुखं प्रवासश्च नवप्रभेदाः।।**

राजवल्लभमण्डने तु कृत्तिकादिसप्तसप्तनक्षत्राणि यथाक्रमं स्थाप्यानि। ननु क्रमेण पूर्व-दक्षिण-पश्चिमोत्तरदिशानुसारेण चन्द्रविन्यासो भवति। अथ गृहनक्षत्रं यस्मिन् भागे भवति चन्द्रवस्थितिरपि तस्मिन्नेव नक्षत्रे भवतीति विनिश्चितम्। नक्षत्रवशेन पृष्ठस्थो चन्द्रः अशुभः, दक्षिणे वामे च चन्द्रावस्थितिर्शुभा भवति। तद्यथोक्तं हि -

**धिष्णयानीह च सप्तशः क्रमतया वह्नेस्तु पूर्वादितः**

**सृष्ट्या तानि भवन्ति यत्र गृहभं तत्रैव चन्द्रो भवेत्।**

**हानिं पृष्ठगतः करोति पुरतस्त्वायुः क्षतिं चन्द्रमाः**

**पार्श्वे दक्षिणवामके शुभकरोऽग्रे भूपदेवालयोः।।** [१०]

**(२) गृहेशगृहपतिमेलापकम्**

गृहेशगृहपतिलापकस्य विविधाः पक्षास्सन्ति। तेषु निम्नलिखिताः त्रयः पक्षाः प्रमुखाः -

१. गृहदेवेशवशाद् गृहपतेर्मेलापकम्।

२. गृहनक्षत्रेशवशाद् गृहपतेर्मेलापकम्।

३. गृहराशीशवशाद् गृहपतेर्मेलापकम्।

यथा विवाहे वरवध्योर्मेलापकविचारो अष्टकूटैस्सह भवति तथैव गृहेशगृहपत्योरपि मेलापकं भवति। अथ गृहमेलापके तृतीया, पञ्चमी, सप्तमी च ताराः त्याज्याः भवन्ति। वास्तुनिर्धारणकाले गृहेशगृहपतेर्मेलापकदृशा शुभाशुभमेलापकदृष्ट्या देवानामपि विन्यासो वर्तते। तत्र वर्गविन्यासानुसारेण देवानावस्थितिमिर्धारणं तेषां नियन्त्रणञ्च विचारो वास्तुशास्त्रे दरीदृश्यते। अश्विनीतः समारभ्य त्रीणि नक्षत्राणि क्रमेण पुनः व्युत्क्रमेण च विन्यासवशात् नवनक्षत्राणां एकैका नाडी भवति। विविधवास्तुशास्त्रे वास्तुपदविन्यासस्य वर्गीकरणं प्रयोगविषयिणी च चर्चा बहुत्र दृश्यते। यथा हि वास्तुरत्नाकरे -

**आवृत्तिभिर्भैस्त्रिभिश्चभाद्यं क्रमोत्क्रमात्सङ्गणयेदुडूनि।**
**यदेकपर्वण्युभयोश्च हर्म्यहर्म्येशयोर्भेऽतिशुभं तदा स्यात्।।** [११]

ग्रन्थान्तरेष्वपि विषयेऽस्मिन्-

**सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि।**
**परस्परं मित्रयोश्च एका नाडी प्रशस्यते।।**[१२]

## (३) गृहपतिनामाक्षरेण मेलापकम्

गृहपतिनामाक्षरवशादपि बहुत्र वास्तुशास्त्रे मेलापकविचारो दृश्यते। तत्र काकिणी-विचारः प्रमुखः। किं वा गृहपतिनामराशितो षडष्टमे, द्वादशे च वास्तुपिण्डस्य राशिः न भवेदिति विचारणीयः। गृहपतिनामाक्षरवशात् सर्वेषां वर्णवश्यतारादीनामष्टकूटानां विचारपुरस्सरमेव भवननिर्माणं कर्त्तव्यमिति शास्त्रसम्मतं मतम्। तत्र ग्रामनामाक्षरसंख्यां चतुर्भिस्सङ्गुण्य अभीष्टनामाक्षरसंख्यां तत्र संयोज्य सप्ताभिर्भाजिते सति शेषफलवशात् ग्रामाक्षरदृष्ट्या मेलापकं निर्धायते। यथा १. शेषे पुत्रलाभः, २.शेषे धनप्राप्तिः, ३. शेषे व्ययः, ४. शेषे आयुः, ५. शेषे शत्रुक्षयः, ६. शेषे राज्यलाभः, ७. शेषे अर्थात् शून्यशेषके मरणं भवति। तद्यथा मुहूर्त्तरत्नाकरे-

**ग्रामनामाक्षरं ग्राह्यं चतुर्भिर्गुणयेत्ततः।**
**नरनामाक्षरं योज्यं सप्तभिर्भागमाहरेत्।।**
**पुत्रलाभो धनप्राप्तिः व्ययः आयुः क्रमेण च।**
**शत्रुनाशं राज्यलाभं निश्शेषे मरणं ध्रुवम्।।** [१३]

कटपयादिवर्गानुसारेणापि गृहपतिनामाक्षरेण वास्तोर्मेलापकं भवति। तथैव वास्तुजन्यविभिन्नदोषाणां शमनप्रक्रियायामपि नामक्षरमेलापकमावस्यकम्।

**(४) नगरवशेन मेलापकत्वम्**

सम्प्रति नगरवशेन मेलापकविचारो वास्तुदृष्ट्या विविच्यते। तत्र विविधाः पद्धतयः प्रचलितास्सन्ति। तेषु प्रमुखाः यथा-

१. नामाक्षरवशेन ग्रामनगरादीनां मेलापकम्।

२. निवासीनिवासस्थानयोर्नक्षत्रवशात् मेलापकम्।

३. राशिवशाद् मेलापकम्।

तत्र सामान्यनियमो विद्यते। यदि गृहपतेः नामराशितो ग्रामराशिः२/५/९/१०/११ स्थानेषु भवति तदा शुभमेलापकमन्यथा अशुभम्। ग्रामस्य कोणेषु अन्त्यजानां निवासः शुभाय भवति। ग्रामस्य नगरस्य वा दक्षिणे कन्या, नैर्ऋत्ये कर्कटः, पश्चिमे धनुः, वायव्ये तुला, उत्तरे मेष, ऐशान्यां कुम्भः, पूर्वस्मिन् वृश्चिकः, आग्निकोणे मीनः, शेषाः राशयः ग्राममध्ये निवसन्ति। पूर्वादिक्रमेण अवर्गादयः अष्टौ वर्गाः भवन्ति। तद्यथा वास्तुराजवल्लभे-

**नामार्क्षाद्द्विसुताङ्कदिग्भगवतो ग्रामः शुभोऽन्योन्यथा**
**तत्कोणेऽन्त्यभुवां शुभं निवसतां दोषः परेषामलम्।**
**कन्याकर्किधनुस्तुलाक्रियघटाः कौर्प्यण्डजौ याम्यतो**
**मध्येऽन्यन्यवसन्त्यथेन्द्रककुभो वर्गा स्युरोजस्विनः।।** [१४]

अत्रापि स्ववर्गतो पञ्चमर्वर्गराशिः शत्रुर्भवति। अतः स्ववर्गेशात्पञ्चमवर्गेशं विहायैव शेषनगरेषु वासो शुभप्रदः। स्वनामराशितो ग्रामराशिः, नगरराशिर्वा १/७ स्थिते शत्रुता, ३/६ सति हानिः, ४/८/१२ तु रोगाः भवन्ति शेषराशिस्थानानि शुभानि। यथोक्तं ज्योतिस्सारे -

**प्रथमे सप्तमे ग्रामे वैरं हानिस्त्रिषष्ठगे।**
**तुर्याष्टद्वादशे रोगः शेषस्थाने शुभं भवेत्।।**[१५]

नगरवशात् मेलापके तु द्वे पद्धती वर्तेते-(१) ग्रामवासनराकृतिविन्यासः(२) शिवाबलिपद्धतिः। तत्र ग्रामनक्षत्राद् स्वनामनक्षत्रगणनेन नराकृतिचक्रस्य मस्तके पञ्चनक्षत्राणि लाभप्रदानि, मुखे त्रीणि नक्षत्राणि धननाशकानि। कुक्षौ पञ्चनक्षत्राणि धनधान्यप्रदानि। पादे षण्णक्षत्रेषु स्त्रीहानिः। पृष्ठे एकेन पादहानिः। नाभौ चत्वारि सम्पत्तिकारकानि। गुह्यप्रदेशे च

एकं भयप्रदम्। हस्ते एकर्क्षं कष्टकरम् एकेन च क्रन्दनकारिता भवति। एतद्विषये हि वास्तुशास्त्रे प्रमाणं प्राप्यते यत्-

**मस्तके पञ्चलाभाय मुखे त्रीणि धनक्षयः।**
**कुक्षौ पञ्च धनं धान्यं षट्पादे स्त्री दरिद्रता।।**
**पृष्ठे चैकं पादहानिर्नाभौ चत्वारि सम्पदः।**
**गुह्ये चैकं भयं पीडा हस्त चैकन्तु क्रन्दनम्।।**
**वामे चैककरे भेदो ग्रामचक्रं नराकृतिः।**
**गणयेज्जन्मनक्षत्रं ग्रामनक्षत्रतस्तदा।।** [१६]

किञ्च नगरेऽपि कस्मिन् कोणे कस्यां दशि निवासो कर्त्तव्यः इत्यस्य शुभाशुभमेलापकाय शिवाबलिविधिरप्यस्ति। तत्र अष्टदिक्षु शब्दविन्यासेन तज्ज्ञायते। तद्धि बृहद्वास्तुमालायां निगदितमाचार्येण-

**ईशाने मरणं प्रोक्तं चोत्तरो कुरू सर्वतः।**
**वासं वायव्यकोणेषु भयं किञ्चित् प्रजायते।।**
**पश्चिमे वासकरणादानन्दः परिकीर्तितः।**
**नैर्ऋत्ये हि शिवा रौति तदावासं न कारयेत्।।**
**दक्षिणे रौति कल्याणंवह्निकोणे भयं महत्।**
**पूर्वेऽप्युच्चाटनं ज्ञेयं कलिर्वा रिपुभिस्सह।।**
**अष्टदिक्षु यदा रौति तदा वासं न कारयेत्।**
**निश्शब्दे सर्वलाभस्स्यादिति गर्गादिभाषितम्।।** [१७]

इत्थं नानाविधप्रकारेण नगरवशेन मेलापकत्वं वास्तुशास्त्रे विधीयते।

**(५) ग्रामाक्षरदृष्ट्या मेलापकम्-**

ग्रामनामाक्षरसंख्यां चतुर्भिस्सङ्गुण्य अभीष्टनामाक्षरसंख्यां तत्र संयोज्य सप्तभिर्भाजिते सति शेषफलवशात् ग्रमाक्षरदृष्ट्या मेलापकः निधार्यते। यथा १ शेषे पुत्रलाभः, २.शेषे धनप्राप्तिः, ३.शेषे व्ययः, ४.शेषे आयुः, ५.शेषे शत्रुक्षयः, ६.शेषे राज्यलाभः, सप्तशेषे अर्थान्निश्शेषे मरणं भवति। तद्यथा रत्नाकरे-

**ग्रमानामाक्षरं ग्राह्यं चतुभिर्गुणयेत्ततः।**

**नरनामाक्षरं योज्यं सप्तभिर्भागमाहरेत्।।**

**पुत्रलाभो धनप्राप्तिः व्ययः आयुः क्रमेण च।**

**शत्रुनाशं रज्यलाभं निश्शेषे मरणं ध्रुवम्।।** [१८]

व्यावहारिकनाम्नः २, ५, ९, १०, ११ तमो यदि ग्रामराशिर्भवति तदा तस्मिन् ग्रामे वासो उत्तमः। ४,८,१२, स्थिते ग्रामराशौ रोगाः प्रथमसप्तमे तु वैरत्वं तृतीये षष्ठे च हानिर्भवतीति मुहूर्त्तगणपतौ निरूपितमस्ति -

**स्वनामराशितो ग्रामराशिर्द्व्यङ्केषुदिक्शिवैः।**

**सम्मितश्चेत्तदा तस्य तद् ग्रामे वास उत्तमः।।**

**रोगोऽष्टद्वादशे तुर्ये वैरमाद्ये च सप्तमे हानिः।**

**षष्ठे तृतीये च ग्रामराशौ स्वनामभात्।।** [१९]

मुहूर्त्तचिन्तामणावपि एवमेव स्वनामभादभीष्टस्थाननामराशिवशाच्च मेलापकं प्रोक्तमस्ति यथा-

**यद्भं द्व्यंकसुतेशदिङ्मितमसो ग्रामः शुभो नामभात्।** [२०]

**निष्कर्षः**- वैदिकपरम्परायां मानवजीवनस्य लक्ष्यं पुरुषार्थचतुष्टयस्य (धर्मार्थकाममोक्षाणां) सिद्धिरेवास्ति। वास्तुशास्त्रस्य सिद्धान्तपक्षोऽयं यत् प्राकृतिकनैसर्गिकबलोपयोगेन मानवकल्पाणं शास्त्रोक्तरीत्या निर्मिते भवने नूनमेव भवति। अत एव वास्तुशास्त्रे विविधप्रकारैः मेलापकविचारः महत्त्वपूर्णः। गृहनक्षत्रमेलापकविचारे गृहेशगृपतिमेलापके च प्राचीना पद्धतिरत्यन्तं सूक्ष्मा प्रतिभाति। गृहपतिनामाक्षरेण नगरस्य ग्रामस्य वास्तुभूमेश्च मेलापने सर्वेषां मतं सममेव दरीदृश्यते। अस्मिन् क्रमे काकिणीविचारः सर्वापेक्षया प्रामाणिको विधिः सरलतमश्च। अमुकग्रामे वा अमुकनगरे गृहनिर्माणेन गृहस्वामिनः स्थितिः कीदृशी भविष्यतीति विचारणीया। अतः परमन्ये विषयाः विचारणीयाः। मेलापकाभावे वास्तु दोषकरं विघ्नकरञ्च भवति। तथा हि भोजदेवः-

**एवंविधं दोषकरं गृहं स्याद् भर्त्तुश्च कर्त्तुश्च यतस्तदेते।**

**ज्ञेयास्सदा शिल्पिभिरप्रमत्तैस्त्याज्याश्च दोषाः शुभकीर्तिकामैः।।** [२१]

**सन्दर्भाः -**

१. पा०आ०(उणा०१/१७)
२. मत्स्यपुराणम् २५१/२-४
३. मानसारम् ३८/५-५ प्रसन्नकुमार आचार्य,
मुँशीराम, मनोहरलाल, दिल्ली, पुनर्मुद्रण १९९९ ई
४. राजवल्लभवास्तुशास्त्रम् ३/२३
५. वासुरत्नाकरः ४/०१
६. राजवल्लभमण्डनम् ३/१०
७. राजवल्लभण्डनम् ३/०८
८. मुहूर्त्तचिन्तामणौ १२/१२
९. तत्रैव पीयूषधरायाम्
१०. राजवल्लभमण्डनम् ३/११
११. वास्तुरत्नाकरः४/२१
१२. तत्रैव भाष्ये
१३. महूत्तरत्नाकरे ऊद्धतम् वास्तुरत्नाकरः १/१२
१४. वास्तुराजवल्लभः ११/१४
१५. ऊद्धतम्-वास्तुरत्नावल्याम् पृ शं ०३ (अच्युतानन्द झा)
१६. ऊद्धतम्-बृहद्वास्तुमालायाम्-१/१०-१२
१७. बृहद्वास्तुमालायाम् ०१/१३-१६
१८. महूत्तरत्नाकरे (ऊद्धमतम् महूत्तरत्नाकरः-१/१२
१९. महूर्त्तगणपतिः १८/१-२
२०. महूर्त्तचिन्तामणिः १२/०१
२१. समराङ्गणसूत्रधारः -४८/१४०

—०—

सहायकाचार्यः, ज्योतिर्विज्ञानविभागः,
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः,
श्रीविहारः, पुरी-७५२००३

**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किम्**
**नोल्लुके न विलोक्यते यदि दिवा सूर्यस्य किम् भूषणम्।**
**धारानैव पतन्ति चातकमुखे मेघस्य किं दूषणम्**
**यद्धात्रा निजभालपट्टलिखितं तन्मार्जयितुं कः क्षमः।।**

# वास्तुशान्तिपद्धतिः

-प्रीतिरञ्जनाचार्यः

**संग्रामेऽन्धकरुद्रयोश्च पतितः स्वेदो महेशात् क्षितौ।**
**तस्मात् भूतभूच्च भीति जननं द्यावा पृथिव्यो महत्।।**
**तद्देवैः सहसा निगृह्य निहतं भूमावधो वक्त्रकम्।**
**देवानां वचसा च वास्तुपुरुषस्तेनैव पूज्यो बुधैः।।**

सर्वप्रथमे शुभे दिने पूर्वाह्ने यजमानः सस्त्रीकः प्राङ्मुखो दीपं प्रज्वाल्य कलशे गणपतिं वरुणं आदित्यादिनवग्रहान् दशदिक्पालान् ग्रामदेवताश्च पूजयेत्।

स्वस्तिवाचनं पुण्याहवाचनं च कृत्वा देशकालस्मरणान्ते संकल्पाचरेत् यथा - सर्वसंकटनानाविधरोगादिसर्वोपद्रवशान्तिसम्पदायुरारोग्यविवर्धनाय, धनधान्यद्विपद-चतुष्पद-पौत्राद्यभिवृद्धिपूर्वकम्, सुवर्णरजतताम्रत्रपुसीसकांस्यलौहपाषाणादि अष्टशल्यमेदिनीदोषव्यपोहनाय आयव्ययादि नानाविधिहिंसाकलहप्रशमनाय, परिवारस्य सुखशान्तिपूर्वकवास्तोः शुभता सिद्धिद्वारा श्री परमेश्वरस्य प्रीत्यर्थं वास्तुशान्तिं गृहप्रवेशाख्यं कर्म चाहं करिष्ये। तदङ्गतया मातृकापूजनं वसोर्धारापूजनं नान्दीश्राद्धसंकल्पमहं करिष्ये।

संकल्पान्तरं गणपतिपुरःसरं गौर्याद्यष्टादश(अथवा षोडशः) मातृगणानां पूजनं, गणपति-गौरि, पद्मा, शचि, मेधा, सावित्री, विजया, जया, देवसेना, स्वहा, स्वधा, मातर, लोकमातर, धृति, पुष्टि, क्षमा, तृष्टि, आत्मदेवता, कुलदेवतां च स्व स्व नाममन्त्रैः पञ्चोपचारैः (गन्ध, पुष्प, धूप, दीप,नैवेद्यादि) पूजयेत्। वसोर्धाराप्रदानमन्त्रः यथा -वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्त्रधारं देवस्त्वा सविता पुनातु वसो पवित्रेण सतधारेण, सुप्वा कामधुक्षः। ऋत्विक्वरणम् - आचार्यवरणं, पुस्तकाचार्यवरणं, सप्तशत्यादिपाठकानां वरणं, विभिन्नसम्प्रदायगतानां जापकानां वरणं कुर्यात्। सूर्याघ्यं कृत्वा यजमानः आचार्यादि सहितं दीपादीनि सर्वोपकरणानि गृहीत्वा मण्डपं सुसंस्कृतस्थलं वा प्रदक्षिणां कृत्वा पश्चिमद्वारेण प्रविशेत् दिगग्रक्षणं च कुर्य्यात्। मन्त्रः यथा -

**अपसर्पन्तु ते भूता ये भूता भूमि संस्थिता,**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।।**

पञ्चगव्येन कुशैः सर्वगृहं मण्डपभूमिं च प्रोक्षेत्। गायत्रीमन्त्रेण गोमूत्रं, गन्धद्वारमन्त्रेण गोमयं, आप्यायस्व समेतुते मन्त्रेण क्षीरं, दधिक्राब्णमन्त्रेण दधिं, तेजोऽसितिमन्त्रेण घृतं, देवस्यत्वामन्त्रेण कुशोदकं अभिमन्त्रणं कृत्वा सिञ्चनं कुर्यात् ।

गृहमध्ये निर्मिते स्थण्डिले अग्निस्थापनं कृत्वा तस्य ऐशान्ये चतुरङ्गुलि-उन्नतां वास्तुवेदिकां नर्माणं कुर्य्यात्। ग्रहवेदिकायां ग्रहान् (सूर्यचन्द्रमङ्गलबुधगुरुशुक्रशनिराहुकेतुग्रहान्) स्वनाममन्त्रैः अथवा वैदिकमन्त्रैः संपूज्य पुण्याहवाचनं कुर्य्यात्। तदनन्तरमस्मिन् वास्तुशान्तिकर्मणि कुण्डादिषु गृहे च न्यूनाधिकाङ्गतादि वास्तुदोषसंसूचितं सर्वारिष्टनिवर्हणार्थं वास्तुमंडलदेवतास्थापनं पूजनमहं करिष्ये।

वास्तुमंडलचतुष्कोणेषु ईशानाग्नेयादि क्रमेण शङ्कुचतुष्टयं दद्यात् अर्थात् लौहकीलकान् निवेशयेत्, तत्र सूत्रयोजनं च कुर्य्यात्। वास्तु वेद्योपरि वस्त्रे कुंकुमादिना पञ्चवर्णचूर्णैः पश्चादारभ्य प्रागन्ता अङ्गुलद्वयन्तरालादशरेखाः कुर्युः। अनन्तरं दक्षिणारभ्या उदग्न्ता दशरेखाः कार्य्या। एतेषां रेखाकरणमन्त्राः बृहद्वास्तुमालायां वर्तते।

ईशानकोणपदादारभ्य प्रदक्षिणक्रमेण तण्डुलपुञ्जेषु पूगीफलेषु वा शिख्यादिदेवताः स्व स्व पदेषु प्रणवव्याहृतिभिः तत् तत् नाम्ना आवाह्य स्थापयेत्।

१) ओँ भूः भूवः स्वः शिखिने नमः, आवाह्वयामि, स्थापयामि, अनेन प्रकारेण

२) पर्जन्याय नमः ३-जयन्ताय नमः ४-कुलिशायुधाय नमः ५-सूर्याय नमः ६-सत्याय नमः ७-भृषाय नमः ८-आकाशाय नमः ९-वायवे नमः १०-पूष्णे नमः ११- वितथाय नमः १२-गृहक्षताय नमः १३-यमाय नमः १४-गन्धर्वाय नमः १५-भृङ्गराजाय नमः १६-मृगाय नमः १७-पितृभ्यो नमः १८-दौवारिकाय नमः १९-सुग्रीवाय नमः २०-पुष्पदन्ताय नमः २१-जलधिपतये नमः २२-असुराय नमः २३-शोषाय नमः २४-पापाय नमः २५-रोगाय नमः २६-अक्षये नमः २७-मुख्याय नमः २८-भल्लाटाय नमः २९-सोमाय नमः ३०-नागाय नमः ३१ अदितये नमः ३२-दितये नमः ३३-अद्भ्यो नमः ३४-आपवत्साय नमः ३५-अर्यम्णे नमः ३६-सावित्राय नमः ३७-सवित्रे नमः ३८-विवस्वते नमः ३९-विवुधाधिपाय नमः ४० जयन्ताय नमः ४१-मित्राय नमः ४२-राजयक्ष्मणे नमः ४३-रुद्राय नमः ४४- पृथ्वीधराय नमः ४५-ब्रम्हणे नमः ४६ चरकै नमः ४७-विदार्यै नमः ४८-पुतनायै नमः ४९-पापराक्षसै नमः ५०-स्कन्धाय नमः ५१-अर्य्यम्णे नमः ५२-जृम्भकाय नमः ५३- पिलिपिच्छाय नमः ५४-इन्द्राय नमः ५५-अग्नये नमः ५६-यमाय नमः ५७-निऋतये नमः ५८-वरुणाय नमः ५९-वायवे नमः ६०-कुवेराय नमः ६१- ईशानाय नमः ६२-ब्रम्हणे नमः ६३-अनन्ताय नमः ६४-अनन्ताय नमः ६५-वासुकये नमः

६६-तक्षकाय नमः ६७-कर्कोटकाय नमः ६८- शङ्खाय नमः ६९-कुलिकाय नमः ७०-पद्मायै नमः ७१-महापद्मायै नमः ७२-दुर्जयायै नमः ७३-विकटायै नमः ७४- घोरायै नमः ७५-भीषणायै नमः ७६-भयानक्यै नमः ७७-यमदंष्ट्रायै नमः ७८-कालजिह्वायै नमः ७९-क्रोशिनै नमः ८०-ताडिनै नमः ८१-प्रधानवास्तुपुरुषाय नमः।

सर्वेभ्यो वास्तुपुरुषेभ्यो आसनं, पादासनं, गन्धं, पुष्पं, दीपं, नैवेद्यं च संपूज्य पुष्पाञ्जलिं मासोदनवलीं च दद्यात्। अग्निसंस्कारं कृत्वा वास्तुपुरुषप्रधानदेवतात्वात् आदौ वास्तुदेवताहोमः। मन्त्रो यथा -

**वास्तोष्पते प्रतिजानिह्यस्मान् स्त्वावेशो अनमिवो भवानः यत्तेमहे प्रतितन्नो जुषस्व शन्नोभवद्वीपदे शं चतुष्पदे।**

**तदन्तरमावाहितदेवता होमः।**

रक्षोघ्नेन अथवा पावमानेन गृहं प्रागादितः त्रिसूत्रीकरणं, दुग्धकुम्भेन, जलकुम्भेन गृहम् प्रागादितः अविच्छिन्नधाराद्वयेन सिञ्चनं, सप्तधान्यविजानि प्रक्षेपणं च। यजमानः ईशानकोणादष्टमे आकाशपदे जानुमात्रभूमिं खनित्वा गोमयेन उपलिप्य गन्धमाल्यादिभिः संस्कृत्य सप्तधान्यादिभिः दधिं तत्र प्रक्षिप्य जानुनिभूमौ निपात्य **ॐ नमो वरुणाय** इति जलेन गर्तं पूरयेत्। मृण्मयपेटिकायां सप्तधान्य-दधि-शैवाल-वास्तुप्रतिमाञ्च संस्थाप्य गन्धदिभिः संपूज्य गर्ते निक्षिपेत्। गर्तं प्रपूर्य गर्तोपरि गोमयेनोपलिप्य गन्धादिभिः भूषयेत्। एतत्कर्मानन्तरं पूर्णाहुतिहोम-प्राशन-मार्जन-पूर्णपात्रदानञ्च कृत्वा आचार्येभ्यो दक्षिणां गां च दत्वा तिलकाशीर्वादं देवताविसर्जनञ्च कुर्यात्। प्रर्थनापूर्वकं सपरिवारैः गृहं प्रविशेत्। मन्त्रः-

**पूजितोऽसि मया वास्तो होमादैरर्चनैर्शुभैः।**
**प्रसीद पाहि विश्वेश देहि मे गृहजं सुखम्।।**

—o—

शोधच्छात्रः,ज्योतिषविभागः
श्रीसदाशिवपरिसरः, पुरी

# मुहूर्त्तचिन्तामणयनुसारं गृहप्रवेशकाल:

**-सीताकान्तकर:**

मानवस्य जीवनं यत्रामयमस्ति। श्रीमद्भगवद्गीतायां भगवता कृष्णेनोक्तम्- **क्षीणे पुण्ये मर्त्यलोकं विशन्ति।** अर्थात् पुण्यफलानां भोगात्परं जीव: मर्त्यलोकं प्रति यात्रां करोति। मर्त्यलोके यात्रां कुर्वन् मनुष्य: सततसाधनाद्वारा स्वं सर्वोच्चध्येयं मोक्षं प्राप्नोति। मोक्षस्यार्थ: भवति, ब्रह्मलोकस्य यात्रा। एषा यात्रा सूक्ष्मशरीरस्य यात्रा भवति। ऐतरेयब्राह्मणेऽपि इन्द्र: हरिश्चन्द्रस्य पुत्रं प्रति कथयति- **चरन् वै मधु विन्दति** अर्थात् मानवस्य निरन्तरगतिशीलमन: जीवनस्यास्तित्वं साधयति। ज्ञानविज्ञानप्राप्तये कदाचित् मानव: निकषा गच्छति। ततो आचार्यस्यादेशेन संसारसुखप्राप्तये मानव: गृहस्थाश्रमं प्रवेशं करोति। प्रवेशे गृहस्थाश्रमे मानव: स्व पत्न्या: सह सर्वं साधयति। विवाहात्परं नवविवाहिता कन्या यदा स्वपतिगृहं प्रथमतया प्रविशति, तदा कश्चन शुभसमय अन्वेषणीय: भवति। कथं गृहप्रवेश: सुखद: भव्याशुभप्रभावमुक्त: स्यादिति विचारणीय: भवति। प्रसङ्गेऽस्मिन् मुहूर्त्तचिन्तामणौ-

**अपूर्वसंज्ञं प्रथमप्रवेशं यात्रावसाने च स पूर्वसंज्ञम्।**

**द्वन्द्वाह्वयश्चाग्निभयादिजातस्त्वेवं प्रवेशस्त्रिविध: प्रवेश:।।**[१]

अर्थात् महर्षिवशिष्ठमते नवनिर्मिगृहप्रवेश अपूर्वसंज्ञक:, यात्रानिवृत्तौ य: गृहप्रवेश: स: सपूर्वसंज्ञक:, तथाऽग्न्यादिषु विनष्टगृहस्य पुनरुत्थानजन्यप्रवेश: द्वन्द्वाख्येति त्रिविधप्रवेश:। पुनश्च गृहप्रवेशस्य शुभमासविषये लिखितमस्ति यत्-

**माघ-फाल्गुन-वैशाख-ज्येष्ठमासेषु शोभन:।**

**प्रवेशो मध्यमो ज्ञेय: सौम्यकार्त्तिकमासयो:।।**[२]

अर्थात् माघ-फाल्गुन-वैशाखमासेषु, उत्तरायणे सूर्ये गृहप्रवेश: शुभकर: भवति। पुनश्च लिखितमस्ति यत् - सौरमानेनाऽपि गृहप्रवेश: ग्राह्यम्। विषयेऽस्मिन् वशिष्ठवचनं यथा-

**मृगादिषड्राशिषु संस्थितेऽर्के नवप्रवेश: शुभद: सदैव।**

**कुम्भं विनान्येष्वपि केचिदूचुर्न सौरमिष्टं खलु सन्निवेशे।।**[३]

अर्थात् मकरादिषड्राशिसंस्थिते सूर्ये नूतनगृहप्रवेशः शुभफलदो भवति। तत्रापि माघादिषु चतुर्षु मासेषु गृहप्रवेशः शुभः। प्रसङ्गेऽस्मिन् वसिष्ठवचनम् -

**वधूप्रवेशो न दिवा प्रशस्तः राजप्रवेशो न निशि प्रशस्तः।**

**दिवा च रात्रौ च गृहप्रवेशः सत्कीर्तिदस्स्यात्त्रिविधः प्रवेशः।।**[४]

अर्थात् दिवसे वधूप्रवेशः न शुभकरः, यात्रानन्तरं राज्ञः राजद्वारे रात्रौ गृहप्रवेशः न शुभकरः । परन्तु शास्त्रनियमानुसारेण सामान्यरूपेण गृहप्रवेशः दिवसे रात्रौ च शुभफलदः। सर्वविधप्रवेशे क्रूराक्रान्तविद्धादिनि नक्षत्राणि वर्ज्यानि भवन्ति। त्रिविधप्रवेशे रामदैवज्ञस्य लग्नादिशुद्धिविचारः यथा-

**त्रिकोणकेन्द्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः।**

**शुद्धाम्बुरन्ध्रे विजनुर्भमृत्यौ व्यर्कारिरिक्ताचरदर्शचैत्रे।।**[५]

अर्थात् गृहप्रवेशलग्नात् केन्द्रे,(१,४,७,१०) त्रिकोणे,(५,९) द्वितीये, तृतीये, दशमे, एकादशे भावे शुभग्रहाणां, त्रिषडायेषु पापग्रहाणां स्थितिः, चतुर्थाष्टमभावयोः सर्वग्रहरहितयोः तथा च जन्मराशौ अथवाष्टमलग्ने यदि शुभग्रहाः न भवन्ति चेत्तादृशे लग्ने गृहप्रवेशः करणीयः। रविवासरे मङ्गलवासरे, रिक्तातिथौ, चैत्रमासे, अमावास्यायां गृहप्रवेशः नैव करणीयः।

इदानीं रामदैवज्ञमते वामरविविचारः -

**वामो रविर्मृत्युसुतार्थलाभतोऽर्के पञ्चमे प्राग्वदनादिमन्दिरे।**

**पूर्णे तिथौ प्राग्वदने गृहे शुभो नन्दादिके याम्यजलोत्तरानने।।**[६]

अर्थात् पूर्वाभिमुखगृहे प्रवेशलग्नात् अष्टमस्थानं, तस्मात् पञ्चमराशिं यावत् वामरविः भवति। दक्षिणाभिमुखगृहे प्रवेशलग्नात् पञ्चमस्थानं ततः पञ्चमराशिं यावत् वामरविः भवति। पश्चिमाभिमुखगृहे प्रवेशलग्नात् द्वितीयस्थानं तस्मात् पञ्चमराशिं यावत् वामरविः भवति। उत्तराभिमुखगृहे प्रवेशलग्नात् एकादशस्थानं तस्मात् पञ्चमराशिं यावत् यदि सूर्यः तिष्ठति चेत् सः वामरवि इत्युच्यते। तथा पूर्णातिथौ पूर्वाभिमूखगृहे, नन्दातिथौ दक्षिणाभिमुखगृहे तथा भद्रातिथौ पश्चिमाभिमुखगृहे, जयातिथौ उत्तराभिमुखगृहे प्रवेशकर्मणि शुभाय भवति।

**गृहप्रवेशे कुम्भचक्रम् -**

**वक्त्रे भूरविभात्प्रवेशसमयो कुम्भेऽग्निदाहः कृताः**

**प्राच्यामुद्वसनं कृतायमगताः लाभः कृताः पश्चिमे।**

**श्रीर्वेदाः कलिरूत्तरे युगमिता गर्भे विनाशो गुदे**

**रामाः स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा।।**[७]

गृहप्रवेशसमये कुम्भचक्रं निर्माय तस्यानुसारं शुभाशुभं विचार्य गृहप्रवेशः करणीयः। तत्र सूर्याधिष्ठितनक्षत्रात् गृहप्रवेशदिनस्य चन्द्रनक्षत्रं कलशचक्रस्य मुखे प्रथमनक्षत्रं स्थापयामः। फलत्वेन गृहप्रवेशकरणे अग्निना गृहदाहः भवतीति शास्त्रवचनम्। तद्वदेव सूर्यनक्षत्रात् चन्द्रनक्षत्रं चत्वारः (अर्थात् २ तः ५ ) नक्षत्राभ्यन्तरे पूर्वस्यां फलत्वेन गृहप्रवेशकरणे उद्वसनम्(जनवासशून्यम्)। तथैव सूर्यनक्षत्रात् चन्द्रनक्षत्रं चत्वारः (अर्थात् ६ तः ९) नक्षत्राभ्यन्तरे दक्षिणस्यां, फलत्वेन गृहप्रवेशकरणे गृहपतेः द्रव्यलाभः भवति। सूर्यनक्षत्रात् चन्द्रनक्षत्रं चत्वारः (अर्थात्१० तः १३) नक्षत्राभ्यन्तरे पश्चिमायां, फलत्वेन गृहप्रवेशकरणे गृहकर्ता लक्ष्मीसम्पन्नः भवति। सूर्यनक्षत्रात् चन्द्रनक्षत्रं चत्वारः (अर्थात्१४ तः १७) नक्षत्राभ्यन्तरे उत्तरस्यां, फलत्वेन गृहप्रवेशकरणे गृहकर्ता निरर्थक-कलहलिप्तः भवति। सूर्यनक्षत्रात् चन्द्रनक्षत्रं चत्वारः (अर्थात्१८ तः २१) नक्षत्राभ्यन्तरे कलसस्य गर्भे, फलत्वेन गृहप्रवेशकरणे गृहकत्रोः विनाशःभवति। सूर्यनक्षत्रात् चन्द्रनक्षत्रं त्रिणि (अर्थात् २२ तः २४) नक्षत्राभ्यन्तरे अधः, फलत्वेन गृहप्रवेशकरणे गृहकत्रोः स्थिरता नाम अधिकाधिकसमयः गृहस्वामी स्वगृहे वसति इति भावार्थः। अन्तिमे सूर्यनक्षत्रात् चन्द्रनक्षत्रं त्रीणि (अर्थात् २५-२६-२७) नक्षत्राभ्यन्तरे कण्ठे, फलत्वेन गृहप्रवेशकरणे गृहकर्त्रोः स्थिरता शान्तिश्चागच्छति।

कीदृशं गृहं प्रवेशयोग्यं न भवति तद्विषये वशिष्ठवचनं यथा-

**यद्वास्तुपूजारहितं त्वदत्तबलित्वेनाच्छन्नगृहं विरूपम्।**

**कपाटहीनं न विशेद्यतस्तत्सर्वापदामालय एव तत्स्यात्।।**[८]

नारदोऽपि- **अकपाटमनाच्छन्नमदत्तबलिभोजनम्।**

**गृहं न प्रविशेदेवं विपदामाकरं हि तत्।।**[९]

अर्थात् द्वारम्, आच्छादनं, वास्तुबलीं, ब्राह्मणभोजनञ्च विना गृहप्रवेशः न करणीयः। एतादृशं गृहं विपत्तिप्रदायकं भवति।

**गृहप्रवेशानन्तरं कर्तव्यम् -**

**एवं सुलग्ने स्वगृहं प्रविश्य वितानपुष्पश्रुतिघोषयुक्तम्।**

**शिल्पज्ञदैवज्ञविधिज्ञपौरान् राजाऽर्चयेद्भूमिहिरण्यवस्त्रैः।।**[१०]

अर्थात् राजा शुभलग्ने, वितानैः नाम वस्त्रमण्डपैः, ऋतुजातपुष्पैः सुसज्जितं च कृत्वा वेदध्वनिना साकं स्व गृहप्रवेशं कुर्यात्। तदनन्तरं राजा शिल्पज्ञं, दैवज्ञं, विधिज्ञं भूमिवस्त्राभूषणैः अन्तिमे पौरान्नपि भूमिवस्त्राभूषणैः सन्तोषयेदिति। अनेन प्रकारेण गृहप्रवेशस्य नियमानां परिपालनं कृत्वा गृहप्रवेशः करणीयः। येन गृहकर्तुः सर्वाः गृहजन्याः वाधाः निवार्यन्ते तथा वास्तुदोषाः अपि न भवन्ति।

**सन्दर्भग्रन्थसूची-**


१. बृहद्वास्तुमाला, गृहप्रवेशप्रकरणम्, श्लो. सं.- १

२. बृहद्वास्तुमाला, गृहप्रवेशप्रकरणम्, श्लो. सं.- ४

३. मुहूर्तचिन्तामणौ, गृहप्रवेशप्रकरणे पीयूषधाराटीकायां प्रदत्तं वशिष्ठवचनम, पृ. सं.- ५८२

४. बृहद्वास्तुमाला, गृहप्रवेशप्रकरणम्-२

५. मुहूर्तचिन्तामणिः, गृहप्रवेशप्रकरणम्, श्लोक सं.-३

६. मुहूर्तचिन्तामणिः, गृहप्रवेशप्रकरणम्, श्लोक सं.-५

७. मुहूर्तचिन्तामणिः, गृहप्रवेशप्रकरणम्, श्लोक सं.-६

८. मुहूर्तचिन्तामणौ, गृहप्रवेशप्रकरणे पीयूषधाराटीकायां प्रदत्तं वशिष्ठवचनम, पृ. सं.- ५९४

९. बृहद्वास्तुमालायाम्, गृहप्रवेशप्रकरणे श्लो. सं.-२०

१०. मुहूर्तचिन्तामणिः, गृहप्रवेशप्रकरणम्, श्लो.सं.-७


—०—


शोधच्छात्रः,

ज्योतिषविभागः, भोपालपरिसरः

# "वास्तुविमर्शः" एकमध्ययनम्

-अशोकमण्डलः

**वेदस्य निर्मलं चक्षुर्ज्योतिः शास्त्रमकल्मषम्।**
**विनैतदखिलं कार्यं श्रौतस्मार्तं न सिद्ध्यति।।**[१]

वेदस्य षडङ्गेषु ज्योतिषशास्त्रं कालविज्ञापकं तथा वेदानां चक्षुस्त्वेन सम्मतमस्ति। यथा मयूराणां शिखाः, नागानां मणयः शोभायमानाः तथैव वेदाङ्गेषु ज्योतिषशास्त्रं मूर्ध्नि संस्थितं भवति। यदुक्तं वेदाङ्गज्योतिषे-

**यथा शिखा मयूराणां नागानां मणयो यथा।**
**तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम्।।**

होरा-सिद्धान्त-संहिताभेदात् ज्योतिषशास्त्रं स्कन्धत्रयसम्बलितमस्ति। अस्य शास्त्रस्य समृद्धा विकसिता च शाखा वर्तते वास्तुशास्त्रम्। द्वयोर्मध्ये अङ्गीभावसम्बन्धो विराजते। एतयोः द्वयोः शास्त्रयोः उद्भवस्तु वैदिकसंहितासु प्राप्यते। उभयोः विकासः भारतीयजीवनदर्शनेन अभिप्रेरितोऽस्ति। तथा प्रतिपाद्यविषयवस्तु मानवजीवने संघटितानां घटनाक्रमाणामध्ययनञ्चास्ति।

वसन्त्यस्मिन्निति वास्तुः। वास्तु इति कथनेन वासस्थानस्यावबोधःभवति। यदुक्तममरकोषे- **"वेश्म भूर्वास्तुरस्त्रियाम्"**[२] इति। वास्तुशब्दः **"वसेस्तुन्नगारे च णिच्च"**[३]इति पाणिनिसूत्रानुसारं वस् धातोः तुन् प्रत्यये णित्वात् आदिवृद्धौ निष्पद्यते। वामनशिवराम-आप्तेमहोदयस्य शब्दकोषानुसारं वस् निवासे धातोः तुण् प्रत्यये निष्पन्नोऽयं वास्तुशब्दः भवनभूखण्डार्थं बोधयति। मयमते तु -

**भूरेव मुख्यं वस्तु स्यात् तत्र जानाति यानि हि।**
**प्रसादादीनि वस्तुनि वस्तुत्वात् वस्तुसंश्रयात्।।**

अर्थात् गृह-भवन-प्रासाद-दुर्ग-मन्दिर-नगर-ग्राम-विपण्यादि सर्वं वास्तुशब्देन अभिधीयते। शास्त्रमिदं वैदिकऋषीणां यज्ञादिक्रियाणां सम्पादनहेतवे कुण्डनिर्माणं, मण्डपनिर्माणं, वेदिकानिर्माणं, उपनिषत्कालीनाश्रमेषु यज्ञशालानिर्माणादारभ्य पौराणिककाले राजप्रासादनिर्माणं यावद् क्रमेण विस्तारं प्राप्तवान्। वास्तुशास्त्रं नाम निर्माणविज्ञानमपि वक्तुं शक्यते। अतः सौधनिर्माणादिषु शास्त्रस्यास्योपयोगः क्रियते।

**वास्त्वाचार्याः** - शिल्पशास्त्रानुसारं पाराशरमुनिः सर्वप्रथमं बृहद्रथं वास्तुपुरुषवृत्तान्तमवदत्। बृहद्रथश्च विषयेऽस्मिन् स्वर्गशिल्पिनं विश्वकर्माणमकथयत्। विश्वकर्मा जगन्मङ्गलाय अस्याः विद्यायाः गृहादिनिर्माणे प्रयोगञ्चकार। गुरुशिष्यपरम्परया शास्त्रमिदं लोके प्राप्तम्। समराङ्गणसूत्रधारे वास्तुशास्त्रविशारदरूपेण अष्टदशाचार्याणां नामानि प्राप्यन्ते। ते यथा -

**भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा।**

**नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः।।**

**ब्रह्माकुमारी नन्दीशः शौनको गर्ग एव च ।**

**वासुदेवोऽनिरुद्धश्च तथा शुक्रः बृहस्पतिः।।**

**अष्टादशैते विख्याताः वास्तुशास्त्रोपदेशकाः।**

एवमग्निपुराणेऽपि पञ्चविंशति वास्त्वाचार्याणां तथा च मानसारे द्वात्रिंशत् वास्वाचार्याणां नामानि उल्लिखितानि सन्ति।

**वास्तुशास्त्रस्य वर्णना-**

प्राचीनभारते प्राप्तेषु बहुषु ग्रन्थेषु वास्तुशास्त्रवर्णनाया उल्लेखः परिदृश्यते। ते यथा- वैदिकवाङ्मये वास्तुशास्त्रम्- वैदिकवङ्मये ऋक्संहितायां वास्तोस्पतेः कृते बहुवारं प्रार्थनाः कृताः दृश्यन्ते। तद्यथा-

**वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः।**

**यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।।**[४]

एवमथर्ववेदे शालानिर्माणकलाप्रकाशने बहवः मन्त्राः उपलभ्यन्ते। तद्यथा-

**इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठति घृतमुक्षमाणा।**

**तां त्वा शाले सर्ववीराः सुविरा अरिष्टवीरा उप सं चरेम।।**[५]

ऋग्वेदस्य एकस्मिन् मन्त्रे राजा वरुणस्य सहस्त्रैकद्वारयुतस्य भवनस्योल्लेखो वर्तते। तद्यथा-

**बृहन्तं मानं वरुण स्वधावः सहस्त्रद्वारं जगमा गुहं ते।**[६]

उपरोक्तमन्त्रे बृहन्तं मानम् इति पदेन विशालं भवनं सूचितम्। ऋग्वेदे त्रिधातु भवनस्योल्लेखोऽपि दृश्यते। यथा-

**इन्द्र त्रिधातु शरणं त्रिवरूथंस्वस्तिमत्।**

**छदिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः।।**[७]

लौहनिर्मितनगरं- ऋगथर्ववेदयोः लौहनिर्मितं दुर्गवर्णनमपि कृतम्। यथा-

**पुरः कृणुदध्वम् आयसीरधृष्टा।**

पाषाणनिर्मितनगरम्- ऋग्वेदे पाषाणस्य बृहत्तमं नगरं निर्माणमर्हति।

**शतमश्मन्मयीनां पुरीमिन्द्रो व्यास्यत्। दिवोदासाय दाशुषे।।** [८]

वातानुकुलितभवनं- ऋग्वेदे एकं वातानुकुलितभवननिर्माणविषयकं वर्णनमुपलभ्यते।

**आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः।**

**ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे।।**[९]

**पुराणेषु वास्तुशास्त्रम्** - महर्षिकृष्णद्वैपायनव्यासविरचितेषु पुराणेष्वपि वास्तुशास्त्रस्य वर्णनं परिदृश्यते।

**अग्निपुराणे वास्तुशास्त्रम्**- अस्य पुराणस्य त्रिषु अध्यायेषु वास्तुकला, त्रयोदशाध्यायेषु च मूर्तिकलायाः वर्णनं प्राप्यते। तत्र गृहारम्भकालः तस्य शुभाशुभफलं, चतुषष्टिपदवास्तुचक्रं, तेषु देवतानां  स्थापनं तेषां बलिदानविध्यादयः वर्णितास्सन्ति।

**गरुडपुराणे वास्तुशास्त्रम्**- गरुडपुराणस्य चतुर्षु अध्यायेषु वास्तुविद्यायाः वर्णनं दृश्यते। तत्र ४६-४७ अध्यायेषु भवनानां प्रकाराः, दुर्गनिवेशं, पुरनिवेशानां मनोहरशास्त्रीयवर्णनमुपलभ्यते।

**मत्स्यपुराणे वास्तुशास्त्रम्**- मत्स्यपुराणे अष्टाध्यायेषु वास्तुप्रकाराणां वर्णनं मिलिति। तत्र २५२ तमेऽध्याये वास्तुविधायाः अष्टादशोपदेशकाः निरूपिताः। अपि च २५५ तमे स्तम्भमाननिर्णयाध्याये स्तम्भानां विवेचनमस्ति।

**स्कन्दपुराणे वास्तुशास्त्रम्**- अस्य पुराणस्य माहेश्वर-वैष्णवखण्डयोः द्वितीयभागे नगरस्थापनं, स्वर्णशाला, रथनिर्माणं, विवाहमण्डपचित्रकर्मादिवर्णनं प्राप्यते।

एवं वराह-ब्रह्मवैवर्त-श्रीमद्भागवत्-भविष्य-विष्णु-देवीभागवतादिपुराणेषु वास्तुशास्त्रस्य सम्यक् वर्णनमुपलभ्यते।

अपि च महाभारते मयेन युधिष्ठिरस्य सभाभवननिर्माणे वास्तुशास्त्रस्य विलक्षणता प्रदर्शिता। तत्र जलस्थाने स्थलं, द्वारस्थाने भित्तिः इत्यादि वैचित्र्यं शास्त्रस्यास्य महत्त्वं प्रतिपादयति।

विश्वकर्मा वास्तुशास्त्रनिर्माणयोजनायाः कृते एकां विस्तृतां सूचीं प्रतिपादयति, या च वास्तुशास्त्रस्य निर्यासः इत्युच्यते। वास्तुशास्त्रानुसारं निर्माणकार्यस्य कृते श्रीमान् प्रसन्नकुमाराचार्यः स्वकीयग्रन्थस्य मुखबन्धे एवं विवरणं प्रतिपादितवान् यथा-

"The literal rendering of Vastu-Shastra would be science of architecture; but a complete Vastu-Shastra deals with more than what is generally understood by architecture. In this Vatu-Shastra the term architecture is taken in its broadest sense and implies what is built or constructed"(१०)

तस्य ग्रन्थस्य प्रथमभागे सर्वविधं सौधनिर्माणं धार्मिकस्थानवासोपयोगस्थान युद्धविभागादिनिर्माणं विशदमालोचितम्। द्वितीयभागे नगरनिर्माणयोजना-प्रमोदोद्यानयोजना विपणीनिर्माण-पोताश्रय-मार्ग-बन्ध-कूप-पुष्करिणी-जलनिष्कासनप्रणाली-भित्तिनिर्माण-जलसंरक्षणव्यवस्था-जलस्रोत-व्योमयानावतरणकेन्द्र-पर्वतोपरिगृहादिनिर्माणं सोपानादिनिर्माणञ्च परिशीलितम्। तृतीयभागे विविधवस्तु-गृहोपकरणसिंहासनपशुपक्षिनिवासयन्त्रशालायोगगृहनिर्माणविषये सम्यक् तया पर्यालोचितम्।

एतद्विहाय प्रचीनवास्तुग्रन्थाः अपि शास्त्रस्यास्य प्राचीनत्वं प्रतिपादयन्ति। ते यथा - बृहत्संहिता, विश्वकर्मावास्तुशास्त्रम्, समराङ्गणसूत्रधारः, अपराजितपृच्छा, जयपृच्छम्, मयमतम्, मानसारः इत्यादयः।

आधुनिककालेऽपि विविधासु भाषासु वास्तुशास्त्रग्रन्थाः समुपलभ्यन्ते। ते यथा- वास्तुराजवल्लभः, प्रासादमण्डनम्, वास्तुमण्डनम्, कोदण्डमण्डनम्, मूहूर्त्तगणपतिः, मुहूर्त्तचिन्तामणिः वास्तुसूत्रोपनिषद्, बृहद्वास्तुमाला इत्यादयो ग्रन्थाः प्रधानास्सन्ति।

कथ्यते यत् वास्तुशास्त्रस्य महत्त्वं जनजीवने अवश्यमनुभूयन्ते। अस्य सर्वातिशायं महत्त्वं यत् पञ्चमहाभूतैः निर्मितस्य प्राणिजीवनस्य पञ्चमहाभूतानां वातावरणेन सह सामञ्जस्यस्थापनम्। वास्तुशास्त्रेषु तु पञ्चमहाभूतैः निर्मितस्य प्राणिजीवनस्य सन्तुलनं पञ्चमहाभूतात्मके निवासस्थले सुष्ठु भवेदिति उक्तम्। तत्र प्राणिनां जीवने भूमि-जल-अग्नि-वायु-आकाशादि पञ्चमहाभूतानां सदुपयोगः कथं भवेदिति शास्त्रमिदं बोधयति। अतः वैज्ञानिकयुगेऽस्मिन् शास्त्रस्योपादेयता अनुभूयते। प्रसङ्गेऽस्मिन्

बृहद्वास्तुमालायाम्–

**कोटिघ्नं तृणजे पुण्यं मृण्मये दशसंगुणम्।**

**ऐष्टिके शतकोटिघ्नं शैलेऽनन्तं फलं गृहे।।**

एवं प्रकारेण ज्ञायते यत् वास्तुशास्त्रस्य परिसरो व्यापकः, इत्यलम्।।

**सन्दर्भाः**


१. नारसंहिता १/६

२. अमरकोषः शैलवर्गः ३/१९

३. अष्टाध्यायी – उणादि – ३/१/७०

४. ऋग्वेदः ७/५४/०१

५. अथर्वदः ३/१२

६. ऋग्वेदः ७/८८/०५

७. ऋग्वेदः ६/४६/०९

८. ऋग्वेदः ४/३०/२०

९. ऋग्वेदः १०/१४२/०९


—o—


शोधच्छात्रः,

Reg. No. VV/7255/17

श्रीसदाशिवपरिसरः, साहित्यविभागः

# दुर्गानिर्माणे वास्तुविमर्शः

बिश्वलक्ष्मीबिश्वालः

भारतीयसंस्कृतेः, मूलाधारो भवति धर्मः। स एव धर्मः सनातनहिन्दुधर्मत्वेन सर्वत्र स्वीकृतः। अभ्युदयस्य मुख्यं साधनं धर्मः, यस्मिन् अपारशक्तिर्निहिता। स चाभ्युदयनिःश्रेयसोः द्वयोरूर्ध्वं विदधाति मानवतायाः विकासमपि करोति। श्रेष्ठाचरणेन मनुष्यः इहलोके उन्नतिं परलोके च निरतिशयं सुखं लभते। अयं धर्मः सनातनरूपोऽनाद्यनन्त नित्योऽपि च चतुर्दशविद्यानां प्रेरणया उत्सश्च। यतो हि योगीश्वरयाज्ञवल्कयेन धर्मस्य विद्यानां च चतुर्दशस्थानानि स्वीकृतानि। याज्ञवल्क्येनोक्तम्-

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**

**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।१**

धर्मशास्त्रमेव मानवचरित्रस्य नियामकम्। धर्मशास्त्रस्योद्देश्यं प्रत्यक्षासिद्धम्। मनुष्यस्य स्वाभिलषितपदार्थप्रतिपादनमेव धर्मशास्त्रस्योद्देश्यम्। भारतीयधार्मिकसाहित्ये स्मृतिशास्त्रस्य प्रमुखा मान्यता अस्ति। **"वेदोऽखिलो धर्ममूलमिति"**२ समुद्घोषयता मनुना उक्तं यत् -

**यः कश्चित् कस्यचिद्धर्मो मनुना परिकीत्तितः।**

**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।। ३**

मानवजीवने वेदवेदाङ्गोपाङ्गनां महत्त्वपूर्णं स्थानमस्ति। तत् वैदिकसाहित्ये प्रतिपादितमस्ति। तत्र इष्टप्राप्त्यनिष्टपरिहाराय लौकिकालौकिकमुपायं वेदयति यो शब्दराशिः स वेदः। वेदमाश्रित्य सर्वाणि शास्त्राणि प्रभवन्ति । तस्यैव वेदस्य षडङ्गानि सन्ति। पाणिनीयशिक्षायां प्राप्यते-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**

**ज्योतिषामयनं चक्षुर्निरूक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**

**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।४**

धर्मस्य परिपालनं एकः उत्तमः राजा कर्तुं शक्नोति। अराजकराष्ट्रे प्रजाः प्रायशः भयशङ्कुलाः भवन्ति। प्रजारक्षार्थं ईश्वरेण राजासृष्टः तस्मात् राज्यस्य सुपरिचालनाय केषाञ्चन अङ्गानाम् अपि यथावत्व्यवहारः राज्ञा कर्तव्यः। राजधर्मव्यवस्था - राज्यशासनस्य सप्ताङ्गानि स्वीकृतानि याज्ञवल्क्येन।

तानि यथा - (१) स्वामी (२) अमात्य (३) जनः (४) दुर्गः (५) कोशः (६) दण्डः (७) मित्राणि इत्यादयः। तद्यथा-

**स्वाम्यमात्य जनो दुर्गं कोसो दण्डस्तथैव च।**
**मित्राण्येताः प्रकृतयो राज्यं सप्तांगमुच्यते।।५**

एतेषु सप्ताङ्गेषु दुर्गं भवति अन्यतमम्। राजधानी एव शास्त्रस्य मूलस्थलं भवति। जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविल-रम्यमानसामन्त-सुजीविकासम्पन्ने देशे निवसेत् राजा। दुर्गाश्रितान् पशून् मृगादीन् यथा सिंहादयः न हिंसन्ति, तदर्थं दुर्गमाश्रित्य राजानमरयोपि न पीडयन्ति। विभिन्नेषु शास्त्रेषु विविधानि दुर्गाणि प्राप्यन्ते।

**वास्तुशास्त्रे दर्गलक्षणम्-**

**सर्वार्थ कामदं दुर्गं सर्वधर्मं फलप्रदम्।**
**कुर्य्याद्विजमदं राज्यं प्रजानां रक्षणाय च।।**

**दुर्गाणां प्रकारभेदाः यथा-**

**दुर्गं तु षड्विधं शैलं जलारण्यैरिभिद्यम्।**
**भूदुर्गं पङ्कदुर्ग च यथाशास्त्रे प्रविन्यसेत्।।**

**मनुस्मृतौ-**

**धन्वदुर्गं महीदुर्गमब्दुर्गं नार्क्षमेव वा।**
**नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्।।६**

**अर्थशास्त्रस्य वास्तुविद्या-**

कौटिल्यसमये वास्तुविद्या विकसिता आसीत्। अर्थशास्त्रस्य रचनाकाले वास्तुविद्यायाः सिद्धान्तानां दिग्दर्शनं प्राप्यते। अर्थशास्त्रे भवनद्वाराणां संज्ञा देवसमबन्धिता आसीत्। अपि च परिभाषिकाभिधानमासीत्। शास्त्रेऽस्मिन् बहूनां विषयाणां विचारः दरीदृष्यते। तथापि तेषु विषयेषु राज्ञः निवासाय तं दुर्गनिर्माणम् अत्यन्तं प्रयोजनस्थानं भजते। राज्ञः निवासनिमित्तं दुर्गस्य आवश्यकता भवति इति प्रचीनेषु शास्त्रेषु वर्ण्यते।

**कौटिल्यमते** - औदिकम्, पार्वतम्, धान्वतम्, वनदुर्गं च। एतेषु नदी-पर्वत दुर्ग देवरक्षानिमित्तं तथा धान्वनदुर्ग आत्मरक्षानिमित्तं व्यवह्रियते।

कौटिल्यार्थशास्त्रे वास्तुप्रशस्ते देशे राजा अनेन कक्षपरिमितं भूतलं प्रासादं निर्मियते। यच्च दुर्गं परिखाद्वारा वेष्टितं चतुर्भिः तोरणैः परिशोभित च भवेत्। पृथक्रूपेण कन्या तथा राजपुत्राणां

राजमहिषिणां कृते च अन्तःपुरं परिकल्पयेत्। प्रत्येकभवनस्य सम्मुखभागे अलङ्काग्रभूमिः परिशोधिता स्यात्। विभागमुख्याणां, सचिवाानां, मन्त्रिणां, भवनं, सन्यासानां निवासस्थानं, गर्भव्याधितदासदासीनां निवासस्थानं पृथक्रूपेण परिकल्पयेत्।

इदं च दुर्गं यथा अग्निना दह्यमानं न भवेत्। तदर्थं वैद्युत्भष्मना परोपकारिणाम् उपलेपनं च कारयेत्। दुर्गमध्ये यथा- विषयस्य प्रभावं भवेत्। तदर्थं नकुलशुकमार्जारादीनां पालनं अपि कुर्य्यात्। विशद् वराश्व तत्रदुर्गमध्ये नूनं स्थापयेत्। तलावपातं निमित्तं यन्त्रवद्धः व्यवस्थाऽपि कर्त्तव्यम्। आपद्काले निर्गमननिमित्तं श्रृङ्गव्यवस्थाऽपि परकल्पनीया भवति। दुर्गमध्ये अनाधिकारिणा मुद्राहस्ताक्षरं च भवेत्। अन्तपुरं प्रति न कश्चिद् अनाधिकारी गच्छेत्। तत्रापि अत्यन्तं विश्वासभाजः दौवारिकाः, किराताः कुब्जाः, वामनाः स्त्रियश्च रक्षानिमित्तं तिष्ठेयुः। अतोऽहि दुर्गदा परिरक्षेयुः। आत्मप्राणवाधेऽपि राज्ञः सुरक्षा सर्वादौ कर्त्तव्या भवति। आत्मरक्षाप्रकरणे दुर्ग तथा च रक्षा पुरुषाः विशिष्टस्थानं प्राप्नुवन्ति। अतः दुर्गस्य निर्माणकाले गोपनीयता अपि रक्षणीया।

दुर्गं सर्वदा धान्यायुधसमन्वितं, दृढप्राकारिकं, हस्त्यश्वरथसङ्कुलं, विद्वित्शिल्पधार्म्मिकजनसंसेवितं, सुप्रभं, सानुनादं, सुप्रशस्तनिवेशनं, शुरादिजनसम्पन्नं, समाजोत्सवसम्पन्नं, पूज्तिदैवतं, राजा स्वयमाविषेत्। दुर्गमध्ये स्थापनीयानां द्रव्याणां विषये, दुर्गनिर्माणविषये च बृहस्पतिस्मृतौ-मत्स्यपुराणादिषु भूयसी चर्चा दृश्यते। विष्णुधर्मोत्तरेऽपि एषान्यतमे दुर्गे धनधान्यसमायुते।

**हस्त्यश्वरथसम्पन्ने मणिभिरूपयशोभिते।**
**यन्त्राढ्ये देवबहुले युद्धोपकरणैर्युते।।**
**सुसाञ्चिते धनाढ्ये च बहुपेये बहूदके।**
**तत्र वसेद् गृहं राजा सर्वापकरणैर्युतम्।।**

एवम् प्रकारेण वास्तुशास्त्रद्दष्टया दुर्गनिर्माणस्य पर्यालोचना विद्यते।

**सन्दर्भाः**


१. या .स्मृ- १/३
२. म.स्मृ- २/३
३. स.स्मृ- २/७
४.पाणिनीयशिक्षायां (४१-४२)
५.या स्मृ- १/३५३
६ म.स्मृ-७/७०
७.विष्णुधर्मेत्तरे २/२६/६-७


—०—

शोघच्छात्रा, धर्मशस्त्रविभागः

# वैदिककाले वास्तुशास्त्रविचारः

**सुमित्रा पण्डा**

मानवजीवने वेदवेदाङ्गानां महत्वपूर्णं स्थानमस्ति। तत्र वैदिकसाहित्ये प्रतिपादितमस्ति तत्र इष्टप्रप्त्यनिष्टपरिहाराय लौकिकमुपायं वेदयति यो शब्दराशिः स वेदः। प्रचीनकालादारभ्य अद्यावधि चत्वारो वेदाः प्रसिद्धाः यथा ऋग्वेदः, यजुर्वेदः, सामवेदः, अर्थववेदश्च। एतेषां चतुर्णां वेदानां क्रमेण आयुर्वेदः, धनुर्वेदः, गान्धर्ववेदः, स्थापत्यवेदश्चेति चत्वार उपवेदाः। वेदपुरुषस्य शब्दशास्त्रं, ज्योतिश्शास्त्रं, निरूक्तं, कल्पः, शिक्षा, छन्दश्चेते षडाङ्गाः वर्तन्ते। एषु वेदाङ्गेषु ज्योतिषशास्त्रं नेत्ररूपेण स्कन्धत्रयात्मकं कथितम्। अत्र जन्मकालग्रहदशानुसारेण मानवहिताय शुभाशुभफलनां निरुपणं क्रियते।

मानवः कश्चन एतादृशः अपि भवति यः प्रकृतिप्रदत्तोपहारं स्वीकरोति कश्चन अन्यः प्रकृतेः तत्त्वं बलात् स्वीकरोति। अयं भावः कालात्मकपरिच्छेदे आवण्टयितुं शक्यतेऽथच विविधकालखण्डेष्वपि एतद्रूपं द्रष्टुं शक्यते।

यद्यपि पशूनां खगाणाञ्च आवासस्वरूपं विचिन्त्य मानवः यायावरभूमिकां परित्यज्य स्थायिनिवासस्य चिन्तनम् अकरोत्। इत्येकः पक्षः अपि विचारयोग्यः भवितुमर्हति। तथापि वास्तुशास्त्रस्य आदिमत्वमेव स्वीकर्तव्यम्। वस्तुतः मानवीया इयं भावना बाह्यात्मिका तस्य संस्कृतेः जनकत्वम् अङ्गीकरोति।

**वास्तुशास्त्रस्यार्थः परम्पराश्च**

वास्तुशब्दस्य निर्वचनं प्रस्तुयता निर्वचनशास्त्रप्रवक्ता वैज्ञानिकीन्वेषणशीलवता भगवता यास्काचार्येणोक्तम् – **वास्तुर्वसतेर्निवासकर्मणः** इति। पाणिनीव्याकरणस्य वस् निवासे इत्यस्माद्धातोः "वसेस्तुन् णिच्च" इति सूत्रेण च वस् धातौ तुन् प्रत्यये कृते सति वस्तु शब्दोनिष्पद्यते। णित्वादादिवृद्धयश्च, तेन वास्तु इति शब्दो निष्पद्यते। तस्य च वास्तोः पाता पालयिता वा। वास्तोष्पतिरिति वौदिको देवविशेषः। वास्तुशब्दस्यार्थो भवति वासयोग्यं यत् स्थानं तद्वस्त्वति। अस्य वासयोगस्य स्थानस्यावाश्यकता सर्वेभ्योऽपि देव–दानव–पशु–पक्षि–कृमि–कीट–पतङ्ग–पिपीलिका–लता–गुल्म–वृक्ष–वनस्पत्यौषध्यादिभ्यः वर्तते एव। यतस्तु यत्र यो वसति तदेव तस्य वास्तु।

वास्तुशास्त्रस्य अपरं नाम विश्वकर्माशास्त्रम्, स्थापत्यशास्त्रम्, शिल्पशास्त्रमपि यत्र ग्रन्थेषु दृष्टिपथं समायाति। केचिद् विद्वांसः बहुभिः शाखाभिः विस्तृतवास्तुशास्त्रं शिल्पशास्त्रं च भेदत्वमङ्गीकुर्वन्ति। केचित्तु तयोरभेदम् अङ्गीकुर्वन्ति। शिल्पशब्दः शिल्पिशब्दश्चद्रव्येषु सौन्दर्यजन्यक्रिया

कौशलम्, स्वभाव: चित्रकार:, प्रतिमाकार:, तन्तुवाय: नापित: रजक: चर्मकार: इत्येषु य: शिल्पविद: स एव शिल्पशब्द: वास्तुशास्त्रे गृह्यते।

**अष्टादशैते विख्याता: शिल्पशास्त्रोपदेशका:।**

मत्स्यपुराणे शिल्पशास्त्रशब्देन वास्तुशास्त्रमपि गृह्यते। वास्तुशास्त्रस्यापरं नाम शिल्पशास्त्रम्। एवं स्थापत्यशास्त्रं शिल्पशास्त्रं विश्वकर्मशास्त्रामिति त्रीणि नामानि दृष्टिपथं समयान्ति। वात्स्यायनेऽपि स्वकीयकामसूत्रे चतुष्षष्टिकलानां वर्णने वास्तुकलाया: विषय: स्वीकृतो वर्तते।

**ऋग्वेदे अथर्ववेदे च स्थापत्यवेद: अस्य प्रतिनिधिरूपं वर्तते।**

**वैदिककाले वास्तुशास्त्रविचार:**

भारतीयज्ञानगङ्गोत्र्या: मूलाधारस्वरूपास्सन्ति ऋग्यजुस्सामार्थर्वाख्या:। वैदिका ऋषयो येषां वैज्ञानिकतत्त्वानां विषये गभीरचिन्तनम्मननञ्चाकुर्वन् तद् वेद इति पदेन मन्त्रसंहितानां बोधो जायते तथैव वैदिकवाङ्मये षड्वेदाङ्गब्राह्मणारण्यकोपनिषदितिहासपुराणादीनां समस्तसंस्कृतशास्त्राणामवबोधो जायते। वैदिकवाङ्मयं खलु समुद्रवदपारमगाधञ्चाकाशवत्सर्वव्यापकं कालादिवदविच्छिन्नं सद्राजते। चत्वारो वेदा: सर्वविदिता:। चतुर्णामपि वेदानां चत्वारोपवेदा आसन् इति प्रायेण सर्वसाधारणं ज्ञानम्। ऋग्वेदस्यायुर्वेद:, यजुर्वेदस्य धनुर्वेद:, सामवेदस्य गान्धर्ववेद:, अथर्ववेदस्य च स्थापत्यवेदश्च। स्थापत्यवेद: अतिप्राचीन: वास्तुशास्त्रविषयान्वितो भवति। मत्स्यपुराणे भृग्वत्रिवशिष्ठादयो अष्टादश वास्तुशास्त्रोपदेशका: उपदिष्टा: सन्ति, तेषु बहवो वैदिका: ऋषयो वैदिककालिका वा महापुरुषा आसन्। स्थापत्यस्य वास्तुशास्त्रस्य वा प्रचीनत्वम् विचिन्तनीयमेव।

वास्तुशास्त्रं स्थापत्यशास्त्रं वा वैदिकवाङ्मयस्य अङ्गमस्ति। वस्तुत: वास्तुकर्म यज्ञकर्म अस्ति। वास्तुमण्डलं वैदिकसाधनाया रेखाचित्रमस्ति। नारदीयवास्तुविधानस्य अनुसारेण इदं मण्डलं यन्त्रमस्ति। वैदिकसाधनायां पूजार्थं यन्त्रस्य योजनावर्तते यत्र प्रधानदेवताया: तत्परिवारस्य च पूजा विधीयते। यदि वास्तुशास्त्रस्य ऐतिहासिकक्रमं परिशील्यते तर्हि सर्वप्रथमं वैदिकवाङ्मयम् अस्माकं पुरत: विलसति।

**वास्तुज्ञानमयो हि स: वेद: सर्वविधज्ञानस्त्रोत: वर्तते।**

**ऋग्वैदिकवास्तु** - ऋग्वेदस्य आदिमे मन्त्रे अग्ने: स्तुति: वर्तते। तत्र अग्ने: स्थानपरिकल्पना मण्ड़पे भवति। मण्डपनिर्माणे वास्तुशास्त्रनुकूलम् एव भवेत्। अत: ऋग्वैदिककाले वास्तुशास्त्रस्य स्थानं महत्वपूर्णम् आसीत्। तत्र ऋग्वेदे बहुषु स्थलेषु स्थापत्यसम्बन्धिविचारा: उपलभ्यन्ते। येन निष्कर्षयितुं शक्यते यत् द्वितीयसहस्त्राब्दे: प्रागपि भारतीया: भवननिर्माणे समर्था: आसन्।

**यजुर्वैदिकवास्तु** - यजुर्वेदे वास्तुपुरूषस्य प्रर्थना यजमानै: क्रियते। वास्तोष्पति इत्यनेन अवगम्यते यत् तस्मिन् कालविशेषे वास्तुस्वरूपं विस्तृतम् आसीत्। तदा वास्तुप्रसङ्गे जनमानसे समीचीना धारणा आसीत्।

**अथर्ववैदिकवास्तु** – अर्थववेदे या भवनविन्यासपरम्परा परिलक्षिता भवति सा अद्यत्वेऽपि अनुक्रियते। वैदिकभवनानां त्रीणि अङ्गानि आसन्। यत्र प्रथम् अङ्गं गृहद्वारं वर्तते। अत्र अजिरस्योऽपि सहभागित्वं भवति। द्वितीयम् अङ्गं सभा भवति अथवा आस्थानमण्डपः भवति। यत्र आगन्तुकानां स्वागतं भवति। तृतीयम् अङ्ग पत्नीसदनं भवति। एतदेव अन्तःपुर संज्ञया आभिधीयते।

वैदिकयुगे सामान्यतया आच्छादितनिवासस्थाने निवासस्य प्रक्रिया प्रारब्धेति। वैदिकसंहितानामवलोकनेनानुमीयते। गेहशालाप्रभृति गेहभेदप्रभेदानां ज्ञानं वैदिकयुगे जनानां आसीत्। अथर्ववेदीयशालासूक्तेनेदं स्पष्टं भवति।

एतावता वैदिकसाहित्यपर्यालोचनद्वारा अवगम्यते यत् भवननिर्माणकलायां ते प्रवीणाः आसन्। तेषां जीवनं सौम्यमासीत्। तत्र आडम्बरादीनाम् अभावः आसीत्।

**ब्राह्मणग्रन्थेषु वास्तुविचारः** – ब्राह्मणग्रन्थेषु वास्तुविद्यायाः स्थानं मिलति। यत्र शिल्पशब्दस्य प्रयोगः मूर्तिकलायां सङ्गीते च वर्तते। ऋग्वैदिकवास्तुविन्नग्रजित् शतपथब्रह्मणे उल्लिख्यते यत्र तदीयसिद्धान्तानां खण्डनं मिलति, अयं हि नारदशिष्यः आसीत्।१

एवमेव शतपथब्राह्मणादिषु वास्तुविद्यायाः विवरणं समुपलभ्यते। व्यवास्तायार्थं धार्मिकपूजार्चनानुष्टानार्थं यत् किमपि भवनं निर्मियते तत् वास्तुरित्युच्यते। तत्र आवासीयगृहं, व्यवसायिककेन्द्रं देवालयम्, उद्यानं, सेतुः, वाटिका, पुष्करिणी, राजकीयभवनानि, सार्वजनिकभवनानि, धर्मशाला, विद्यालयप्रभृतानि सर्वाणि वास्तुसंज्ञकानि भवन्ति।

वास्तुशब्दः निवासयोग्यस्य भवनस्य पर्यायवाची वर्तते। इदं शास्त्रमस्माकं वैदिकपरम्परायां प्रचीनशास्त्रं दृश्यते। अस्य शास्त्रस्य साहाय्येन वयमस्माकं लौकिकजीवने प्रगत्यर्थं विकासार्थं च सर्वथा उपर्युक्तभूमेः भुखण्डस्य चयनं विद्याय तत्र भवननिर्माणं कृत्वा सुखपूर्वकं निवसामः।

वर्त्तमानकाले अर्वाचीनवैज्ञानिकयुगेऽपि सर्वेषां जनानां कृते वास्तुशास्त्रनियमानुसारेण गृहनिर्माणस्यावश्यकता वर्तते। एतस्मिन् विषये जनानं मनसि वास्तुशास्त्रविषयेऽतिवोत्साहः जागरूकत्वं च वर्तते। कराणं तु सर्वे जनाः नूतननिर्मितगृहेषु चिरकालपर्यन्तं सुखेन निवसितुमिच्छन्ति। वास्तुशास्त्रसमाधृत्य संस्कृतविश्वविद्यालयेष्वेव स्वाध्यायनाध्यापनं प्रवर्तते न तु आधुनिकविश्वविद्यालयेषु शिक्षापठ्यक्रमे वास्तुशास्त्रस्याध्ययनाध्यापनदेर्व्यवस्था सर्वकारेण समुचितरूपेण न कार्या। शास्त्रस्यास्य जनिरभूतदस्ति च जनहितायैव अतोजमहितायास्याधाययनमनिवार्यं प्रतिभाति। अधुना आजीविकासमस्या विषमाऽस्ति। तत् समाधानार्थमपि वास्तुशास्त्रस्य पठपाठनस्यानिवार्यता नितरामनुभूयते। अस्यां दिशि सर्वैः प्रयत्नो विधेयः।

१ भारतीय स्थापत्य पृ.२५

—o—

शोधछात्रा सांख्ययोगविभागः

# गृहनिर्माणे सामान्यविधिः

**ज्योतिरञ्जननन्दः**

मनुष्यस्य मौलिकावश्यकता वर्तते खाद्यम्, वस्त्रम्, वासगृहम्। वासोपयोगी गृहनिमित्तं वास्तोः नितान्तावश्यकं वर्तते। वसतीति वास्तु तस्मिन् विषये किञ्चित् प्रतिपाद्यते।

**गृहसंस्थापनं सर्ये मेषस्थे शुभदं भवेत्।**
**वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं ध्रुवम्।।**
**कर्कटे शुभदं प्रोक्तं सिंहे भृत्यविवर्धनम्।**
**कन्यारोगं तुले सौख्यं वृश्चिके धनवर्धनम्।।**
**कार्मुके तु महाहानिर्मकरे स्याद्धानगमः।**
**कुम्भे तु रत्नलाभः स्यान्मीने सद्य भयावहन्।।** (बृहद्वास्तुमाला-नारदमते)

गृहनिर्माणं सूर्ये मेषे सति शुभकरं, वृषे धनवृद्धिकरं, मिथुने मृत्यकरं, कर्के शुभकरं, सिंहे भृत्यवृद्धिकरं, कन्यायां रोगकरं, तुलायां सुखप्रदं, वृश्चिके धनवृद्धिकरं, धनुराशौ महाहानिकरं, मकरे धनागमः, कुम्भे रत्नलाभः, मीने भयं च जायते।

राशयः मेषः वृषः मिथुनः कर्कः सिंहः कन्या तुला वृश्चिकः धनुः मकरः कुम्भः मीनः मासाः वैशाखःज्येष्ठः आषाढः श्रवणः भाद्रपदःअश्विनः कार्त्तिकः मार्गशीर्षः पौषः माघः फल्गुनः चैत्रः फलम् शुभम् धनवृ मृत्युः शुभम् भृत्यवृ रोगः सुखम् धनवृद्धिः हानिः धनी रत्नला. भयम्

१. गृहारम्भे पक्षः - गृहारम्भः शुक्लपक्षे तथा कृष्णपक्षस्य पञ्चमीतिथिं यावत् कराणीयः।

२. गृहारम्भे तिथयः - शुक्लपक्षे २, ३, ५, ६, ७, १०, ११, १२, १३ पूर्णिमायां शुभं भवति।

३. गृहारम्भे नक्षत्राणि - रोहिणी, मृगशीर्षः, हस्तः, चित्रा, स्वाति, अनुराधा, उ.फल्गुनी, उ.षाढा, उ.भाद्रपदा, धनिष्ठा, शतभिषा एवं च रेवती नक्षत्राणि शुभानि भवन्ति।

४. गृहारम्भे वासराः- सोमः, बुधः, गुरुः, शुक्रः तथा शनिवासरे करणीयः।

५. गृहारम्भे लग्नम्- वृषे, सिंहे तथा कुम्भलग्ने गृहारम्भः उत्तमं भवति।

६. गृहारम्भे त्याज्यकालः – भौमे तथा रविवासरे, १, ४, ९, ७, १४ तथा अमावास्यायां तिथौ, मेषे, कर्के तुलायां तथा मकरलग्ने गृहारम्भः न करणीयः।

**दिशानुसारेण वास्तुकक्षादिविचारः**

| **दिशः** | **किं किं करणीयम्** |
|---|---|
| पूर्वे | स्नानगृहम्, अतिथिगृहम्, जलभण्डारः, पूजनगृहम् |
| पूर्वाग्नेयोर्मध्ये | स्नानगृहम्, अतिथिगृहम्, मन्थनगृहम्, पाकशाला, अग्नियन्त्राणि |
| आग्नेयदिशि | स्नानगृहम्, अतिथिगृहम्, पाकशाला |
| आग्नेयदक्षिणयोर्मध्ये | घृततैलं वा भाण्डारगृहम्, शयनकक्षा |
| दक्षिणे | शयनकक्षा, भण्डारगृहम्, सोपानम् |
| दक्षिणनैऋत्ययोर्मध्ये | शयनकक्षा, भण्डारगृहम्, शौचालयः, जलभाण्डः |
| नैऋत्ये | शयनकक्षा, सोपानम्, शौचालयः, शास्त्रागरः |
| नैऋत्यपश्चिमयोर्मध्ये | शयनकक्षा, अध्ययनकक्षा, शौचालयः, भण्डारगृहम्, सोपानम् |
| पश्चिमे | भोजनगृहम्, शौचालयः, सोपानम |
| पश्चिमवायव्ययोर्मध्ये | भोजनगृहम्, वैठकगृहम्, शयनगृहम्, आवर्जनागृहम्, सोपनम् |
| वायव्ये | पशुशाला, अन्नभण्डारः, शौचालयः, सोपानम् |
| वायुव्युत्तरयोर्मध्ये | रतिगृहम्, शिशुगृहम्, भोजनगृहम्, अध्ययनगृहम्, जलभाण्डः |
| उत्तरे | कोषागारः, भण्डारः, स्वागतगृहम्, जलभाण्डः, कुपः, पूजनगृहम् |
| ऐशानोत्तरयोर्मध्ये | औषधगृहम्, कन्याशयनगृहम्, कूपः, भीजनगृहम् |
| ईशाने | पठनगृहम्, कूपः, पूजनगृहम् |
| ईशानपूर्वयोर्मध्ये | सामान्यगृहम्, सूतिकागृहम्, कूपः, पूजनगृहम् |

गृहनिर्माणं आकारदृष्ट्या कियत् भवति इति ज्ञानार्थम् आयसाधनं करणीयम्। आयानुसारेण गृहाणि शुभानि भवन्ति वा न तत् विषये कथ्यते –

**विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्ततः।**
**यच्छेषं स भवेदायो ध्वजाद्यास्ते स्युरष्टधा।।**
**ध्वजोधूम्रौ हरिश्वागौ खरेभौ वायसोऽष्टमः।**
**पूर्वादिदिक्षु चाष्टानां ध्वजादिनामवस्थितिः।।**

(वृहद्वास्तुमाला)

प्रकोष्ठस्य दैर्घ्येन प्रस्थः संगुण्य अष्ट भाजिते सति एकादि शेषानुसारेण ध्वजादि आयः ज्ञायते। तत्फलमपि कथितं यथा –

| शेषः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|
| आयः | ध्वजः | धूमः | सिंहः | श्वनः | गौ | खरः | गजः | काकः |
| फलम् | कीर्तिः | शेकः | जयः | शत्रुः | धनलाभः | निर्धनमता | सुखः | रोगः |

पुनः गृहस्य द्वारं कुत्रकरणिमिति प्रश्ने आयामानुसारेण भवति। यथा ध्वजायः– पूर्व दक्षिणः पश्चमः, उत्तरः, सिंहायः– पूर्व, दक्षिणः, उत्तरः, गौः आयः – पूर्व, गजायः– पूर्व, दक्षिणः।

**नवभागं गृहं कृत्वा पञ्चभागं तु दक्षिणे।**
**त्रिभागमन्तरे कार्यं शेषं द्वारं प्रकीर्तितम्।।**

गृहस्य यस्मिन् भागे द्वारं निर्मातव्यं तस्य भागस्य दैर्घ्यविस्तारौ योजयित्वा नवभिः भाजनं कुर्युः। दक्षिणे पञ्चः तथा उत्तरे त्रयः भागं त्यक्त्वा शेषे द्वारं निर्मातव्यम्। अत्र गृहात् बहिर्गमनकाले वामभागम् उत्तरः तथा दक्षिणभागं दक्षिणः मन्यतु।

१ २ ३ द्वारम् १ २ ३ ४ ५

**द्वारविषये विशेषफलम्**

स्वयमेव उद्घाटितं द्वारं उन्मादं तथा पिहितं द्वारं कुलनाशं करोति। प्रमाणाधिकं राजभयं तथा प्रमाणन्न्यूनं चोरभयं शरीरकष्टं च करोति। द्वारोपरि द्वारम् तथा अनायतं द्वारं अशुभमत्यन्तायतं द्वारं क्षुदभयं विद्धवृक्षक्तं द्वारं कष्टकरञ्च भवति। गृहस्य अन्तः नतं मृत्युकरं, बहिः नतंप्रवासः, अन्यत्रनतं पीडा तस्करभयञ्च भवति। मुख्यद्वारस्य रचनानुसारमेव अन्यद्वाराणि निर्मातव्यानि। तानि च कलशः श्रीफलं, लता, पत्रं, सिंहश्च एतैः चित्रैः अलंकरणीयानि।

—०—

शिक्षाचार्यः प्रथमवर्षम्

# नाट्यशास्त्र वास्तुशास्त्रम्

**डॉ.अनिलकुमारः**

काव्यशास्त्रपरम्परायामादिमो ग्रन्थोऽपि विद्यते नाट्यशास्त्रं यच्च भरतमुनिना प्रणीतम्। षट्त्रिंशदध्यायेषु ग्रन्थोऽपि रससिद्धान्तमूलकः। रसेनाभिनयश्चतुर्धा येषां नाट्यमण्डऽपे मञ्चनं भवति। संगोष्ठीचेयं वास्तुशास्त्रविमर्शोपरि विद्यते तस्मान्नाट्यशास्त्रे वास्तुशास्त्रदृष्ट्या कथं नाट्यमण्डपस्य रचनायै ब्रह्मणा भरतमुनिरादिष्टः सहायकाश्च भरतस्य पुत्राः तत्राभूवन्। नाट्यशास्त्रस्य द्वितीयेऽध्याये नाट्यमण्डपस्य पूजनं, भूमिचयनं, मण्डपस्य प्रकारः, परिमाणञ्च विस्तरेण प्रोक्तमस्ति। तत्रादौ नाट्यमण्डपस्य विषये प्रश्नाः मुनिभिः प्रस्तुता येषां विषये भरतमुनिना नाट्यगृहस्य लक्षणं पूजनविधानं चैवं प्रोक्तम् -

**तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः।**

**लक्षणं पूजनं चैव श्रूयतां नाट्यवेश्मनः।।**

**दिव्यानां मानसी सृष्टिगृहेषूपवनेषु च ।**

**यथाभावभिनिर्वर्त्याः सर्वेभावास्तु मानुषाः।।**

**मराणां यत्नतः कार्या लक्षणाभिहिता क्रिया।**

**श्रूयतां तद्यथा यत्र कर्त्तव्यो नाट्यमण्डपः।।**

**तस्य वास्तु च पूजा च यथा योग्या प्रयत्नतः।।**

अर्थात् देवानां मानसीक्रिया भवति तत्र शास्त्रादिनियमास्तथाऽऽवश्यकता नैव यश्च मानवानां भवन्ति। अनेन ज्ञायते भवननिर्माणविषये मानवेभ्यः शास्त्रनियमा निर्धारितास्ते च वास्तुशास्त्रनाम्ना प्रसिद्धाः। अतो नाट्यमण्डपशास्त्रविज्ञैः विश्वकर्मणा नाट्यमण्डपस्य सन्निवेशस्त्रिविधो परिकल्पितः। प्रसङ्गेऽस्मिन् प्रेक्षागृहदृष्ट्या यथोक्तं भरतेन -

**इह प्रेक्षाहं दृष्ट्वा धीमता विश्वकर्मणा।**

**त्रिविधः सन्निवेशवास्तुशास्त्रतः परिकल्पितः।।**

अर्थात् वास्तुशास्त्रदृष्ट्या प्रेक्षादृष्ट्या च त्रिविधो नाट्यमण्डपस्य रचना कर्त्तव्या –

**विकृष्टश्चतुरस्त्रश्च त्र्यस्त्रश्चैव तु मण्डपः।**

**तेषां त्रीणि प्रमाणनि ज्येष्ठं मध्यं तथाऽधमः।।**

नाट्यगृहस्य निर्माणं परिमाणनुसारेण विहितं तद्विषये–

**प्रमाणमेषां निर्दिष्टहस्तदण्डसमाश्रयम्।**

**शतं चाष्टौ चतुषष्टिर्हस्ता द्वात्रिंशदेव च।।**

अर्थात् नाट्यगृहाणां निर्माणं परिमाणेन भवति। तच्च परिमाणं एवमस्ति विकृष्टस्य शतं चाष्टौ, चतुरस्रस्य चतुषष्टिः, त्र्यस्रस्य द्वात्रिशंत्हस्ताः। प्रथमो ज्येष्ठः, द्वितीयो मध्यमः, तृतीयश्चाधमो नाट्यमण्डपः। एतेषु त्रिष्वपि मध्यमं प्रेक्षागृहं प्रशस्तमुक्तम्। यतोहि तत्र पाठ्यं गेयं च सुखश्राव्यतरं भवति। नाट्यगृहाणां प्रमाणं विश्वकर्मणा निर्दिष्टमस्ति यथा –

**प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा।**

**प्रेक्षागृहाणां सर्वेषां तच्चैव हि निबोधत।।**

**अपि रजश्च बालश्च लिक्षा युक्ता यवस्तथा।**

**अंगुलञ्च तथा हस्तो दण्डश्चैव प्रकीर्तितः।।**

अणुरजबलादीनां पारिभाषिकशब्दानामपि परिमाणं तत्रैवोक्तम् –

**अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ बाल उच्यते।**

**बालास्त्वष्टौ भवेल्लिक्षा यूकालिक्षाष्टकं भवेत्।।**

**यूकास्त्वष्टौ यवो ज्ञेयो यवास्त्वष्टौ तथांगुलम्।**

**अगुंलानि तथा हस्तश्चतुर्थेशातिरुच्यते।।**

**चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः।**

एवं प्रचीनकाले कथं मनुष्यः गृहनिर्माणस्य परिमाणज्ञानं करोति स्म तदपि अनेन ज्ञायते। तत्र प्रेक्षागृहस्य स्वरूपं कीदृशं स्यादित्यस्मिन् विषये उच्यते –

**चतुषष्टिकरान्कुर्याद्दीर्घत्वेन तु मण्डपम्।**

**द्वात्रिंशेन तु विस्तारं मर्त्यानां यो भवेदिह।।**

अत्यधिकविस्तरेण प्रेक्षागृहस्य निमार्ण नैव कर्त्तव्यं भवति यथोक्तम् -

**अत उर्ध्वं न कर्त्तव्यः कर्तृभिर्नाट्यमण्डपः।**

**तस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति।।**

अर्थात् पाठ्यस्य समुचितश्रवणं तत्र नैव भवति। यथोक्तं भरतमुनिना -

**मानुष्यस्य तु गेहस्य सम्प्रवक्ष्यामि लक्षणम्।।**

**भूमेर्विभागं पूर्वन्तु परीक्षेत प्रयोजकः।।**

**ततो वास्तुप्रमाणेन प्रारभेत शुभेच्छया।**

**समा स्थिरा तु कठिना कृष्णा गौरी च या भवेत्।।**

**भूमिस्तत्रैव कर्त्तव्यः कर्तृभिर्नाट्यमण्डपः।**

**प्रथमं शोधनं कृत्वा लांगलेन समुत्कृषेत्।।**

**अस्थिकीलकपालानि तृणगुल्माश्च शोधयेत्।**

**शोधयित्वा वस्तुमती प्रमाणं निर्दिशेत्ततः।।**

एवं भूमिचयनं, परिमार्जनं, तत्कर्षणं यथा बृहद्वास्तुमालायां प्रोक्तं तथैवात्र विद्यते। प्रेक्षागृहस्य निर्माणं कदा कर्त्तव्यमिति जिज्ञासायां शुभनक्षत्राणि अपि उक्तानि -

**त्रीण्युत्तराणि सौम्यञ्च विशाखापि चरेवती।**

**हस्तातिष्यानुराधाश्च प्रशस्ता नाट्यकर्माणि।।**

अर्थात् उत्तराषाढा, उत्तराफाल्गुनी, उत्तराभाद्रपदम्, मृगशिरा, विशाखा, रेवती, हस्तः, अनुराधा चैतानि नक्षत्राणि वास्तुशास्त्रदृष्ट्या नाट्यकर्माणि शुभानि सन्ति। नाट्यमण्डपनिर्माणेऽस्मिन् विषये चात्र निगदितम् -

**पुष्यानक्षत्रयोगेन शुक्लसूत्रं प्रसारयेत्।**

**कार्पासं वाल्वजं वापि मौञ्ज वाल्कलमेव च।।**

तथाभूतं सूत्रनिर्माणपरिमाणे प्रयोक्तव्यं यस्य च्छेदो न स्यात्। अर्थात् छिन्नसूत्रेण मरणम्, त्रिभागच्छिन्नेन राष्ट्रकोपः, चतुर्भागेन छिन्नेन प्रयोक्तुर्नाशः च जायते। अतः नाट्यमण्डपस्य निर्माणे परिमाणसमये च ब्राह्मणान् तर्पयित्वा पुण्याहवाचनपूर्वकं शान्तितोयेन मार्जनं कृत्वा सूत्रस्य प्रसारणं विधातव्यम्। नाट्यमण्डपस्य भूमियोग्यताविषये नाट्यशास्त्रकारः वदति –

**चतुः षष्टिकरान्कृत्वा द्विधा कुर्यात्पुनश्च तान्।**

**पृष्ठतो यो भवेदभागो द्विधाभूतस्य तस्य तु।।**

**तस्यार्धेन विभागेन रंगशीर्षं प्रकल्पयेत्।**

**पश्चिमे च विभागेऽथ नेपथ्यगृहमादिशेत्।।**

कृष्टस्य चतुरस्रस्य (ज्येष्ठस्य मध्यमस्य) च कृते एवं भूमिविभागः कर्त्तव्यः। नाट्यगृहस्याधारशिलस्थापनोत्सवोऽपि नियमेन परिपालनीयः, यथोक्तम् –

**विभज्य भागान्विधिवद यछावदनुपूर्वशः।**

**शुभं नक्षत्रे च मण्डपस्य निवेशनम्।।**

**शंखदुन्दुभिर्निर्घोषैमृदङ्गपणवादिभिः।**

**सर्वातोधौः प्रणुदितैः स्थापनं कार्यमेव तु।।**

दशसु दिक्षु कथं किं च स्थापनीयमित्यस्मिन् विषये उक्तं यत् पूर्वे शुक्तान्नं, दक्षिणे नीलान्नम्, पश्चिमे पीतान्नम्, उत्तरे रक्तान्नम् अर्पणीयम्। यस्यां दिशि योऽधिष्ठाता तत्र तथैव बलिपूजा कार्या। भित्यादीनां स्तम्भानाञ्च स्थापनं तिथिनक्षत्रयोगेन शुभकरणेन च विधातव्यम्। रोहणीनक्षत्रे श्रवणनक्षेत्रे च सूर्योदये स्थापनं शुभप्रदम्। प्रत्येकेऽस्मिन् स्तम्भे क्रमेण सर्पिस्यर्षसंस्कृतं पायसं दद्यात्। क्षत्रियस्तम्भं वस्त्रमाल्यादिकम् रक्तवर्णयुतम्, ब्राह्मणे शुक्लवर्णयुतम्, वैश्यस्तम्भे पश्चिमोत्तरे पीतवर्णयुक्तम्, शद्रस्तम्भे नीलवर्णयुक्तं सामग्रीसर्वं अर्पणीयम्। एतैः सामग्रीभिश्चर्तुणां स्तम्भानां पूजनं कार्यम्। यथोक्तं भरतमुनिना –

**रगंपीठस्य पार्श्वे तु कर्त्तव्या मत्तवारणी।**

**चतुः स्तम्भसमायुक्ता रगंपीठप्रमाणतः।।**

**अध्यर्धहस्तोत्सधेन कर्त्तव्या मत्तवारणी।**

**उत्सेधेन तयोस्तुल्य कर्त्तव्यं रगंमण्डलम्।।**

अत्रापि पूजनविधिस्तथैवानुसर्तव्यो यथा स्तम्भानां विद्यते। रगंपीठस्य निर्माणमपि नाट्यमण्डपस्य विशिष्टं स्थानं भजते। विषयेऽस्मिन् प्रोक्तम् -

**रंगपीठं ततः कार्यं विधिदृष्टेन कर्मणा।**

**रगंशीर्षन्तु कर्त्तव्यं षडदारुकसमन्वितम्।।**

**कर्यं द्वारद्वयञ्चात्र नेपथ्यगृहकस्य तु।।**

अत्रापि मृत्तिकाविधानं वास्तुशास्त्रदृष्ट्या कृष्णामृतिकया एव कृतम्। पृष्ठस्य त्रयो भेदा भवन्ति तेष्वपि द्वादशतलाकाररगंशीर्षं श्रेष्ठम्। यथोक्तम्-

**कूर्मपृष्ठं न कर्त्तव्यं मत्स्यपृष्ठं तथैव च।**

**शुद्वादर्शतलाकारं रगंशीर्ष प्रशस्यते।।**

अत्र च रत्नस्थापनमपि कर्त्तव्यम्, पूर्वे वज्रम्, दक्षिणे वैदुर्यम्, पश्चिमे स्फटिकम्, उत्तरे प्रवालम्, मध्ये कनकम् च दद्यात्।

—o—

# गृहप्रवेशविचारः

**डॉ.नीलमाधवदाशः**

ज्योतिषशास्त्रं कालनिर्धारकशास्त्रम्, तत्र कालज्ञानं विना किमपि कार्यं न प्रवर्तते। मुहूर्त्तस्तु शुभाशुभकालसूचकः। तत्र गृहप्रवेशः शुभतिथौ शुभवासरे शुभनक्षत्रे शुभयोगे शुभलग्ने च क्रियते चेत्तदा शुभफलं प्राप्यते। तत्रादौ त्रिविधः गृहप्रवेशः कथ्यते यथा -

**अपूर्वसंज्ञं प्रथमप्रवेशं यात्रावसाने च सपूर्वसंज्ञम् ।**
**द्वन्द्वाह्वयश्चाग्निभयादिजातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्टः ।।** (बृ.वा.गृ.प्र.श्लो.१)

अत्र महर्षिवशिष्ठेन त्रिविधः गृहप्रवेशः कथितः। गृहनिर्माणानन्तरं नूतनगृहे विधिपूर्वकं सर्वप्रथमः प्रवेशः क्रियते चेत् सः प्रवेशः अपूर्वसंज्ञकः कथ्यते। गृहकर्त्ता राजा वा दीर्घकालिकयात्रायाः समाप्त्यनन्तरं गृहे यदा प्रवेशं करोति तदा सः प्रवेशः सपूर्वसंज्ञकः कथ्यते। वह्न्यादिकोपेन(अग्निना वायुना जलेन वा) नष्टे गृहे सति तस्योद्धारे कृते पुनः प्रवेशः अथवा जीर्णगृहस्योद्धारे कृते पुनः प्रवेशः द्वन्द्वप्रवेश इति नाम्ना प्रसिद्धः। एवं त्रिविधः गृहप्रवेशः पूर्वाचार्यैः प्रतिपादितः। अस्मिन् गृहप्रवेशे कालनिर्णयः यथा -

**वधूप्रवेशो न दिवा प्रशस्तः राजप्रवेशो न निशि प्रशस्तः।**
**दिवा च रात्रौ च गृहप्रवेशः सत्कीर्तिदस्स्यास्त्रिविधः प्रवेशः ।।**(बृ.वा.गृ.प्र.श्लो.२)

यदि विवाहानन्तरं नवोढा कन्या श्वसुरगृहे प्रथमवारं दिवसे(सूर्योदयात् सूर्यास्तं यावत्) प्रविशति तदा अशुभफलं भवति। नवविवाहिता कन्या रात्रौ श्वसुरगृहे न प्रविशेदित्यर्थः। यात्रानिवृत्त्यनन्तरं राज्ञः प्रवेशः रात्रिकाले न शुभदो भवति। अपूर्वसपूर्वद्वन्द्वाह्वयः पूर्वोक्तत्रिविधः गृहप्रवेशः दिवा च रात्रौ च अहोरात्रे स्वेच्छानुसारं शुभमुहूर्त्ते करणीयः। सः प्रवेशः यशः कीर्तिप्रदायकश्च स्यात्। अर्थात् गृहप्रवेशः दिवसे रात्रौ वा कस्मिन्नपि काले स्वेच्छानुसारं शुभमुहूर्त्ते कर्त्तुं शक्यते।

मतान्तरेण गृहप्रवेशकालनिर्णयः क्रियते यथा -

**आदौ सौम्यायने कार्यं नववास्तुप्रवेशनम्।**
**राज्ञा यात्रानिवृत्तौ च यद्वा द्वन्द्वप्रवेशनम्।।**
**विधाय पूर्वदिवसे वास्तुपूजां बलिक्रियाम्।**
**माघ-फाल्गुन-वैशाख-ज्येष्ठमासेषु शोभनः।।**
**प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः ।**
**प्रवेशे निर्णयः प्रोक्तः शास्त्रज्ञैः पूर्वसूरिभिः।**

**गृहारम्भोदिते मासे धिष्ण्ये वारे विशेद् गृहम्।**

**विशेत्सौम्यायने हर्म्यं तृणागारे तु सर्वदा ।।** (बृ.वा.गृ.प्र.श्लो.३-६)

अर्थात् अयं त्रिविधः प्रवेशः उत्तरायणे (मकरादितः मिथुनान्तं यावत् षड्राशौ सूर्यस्य गमने) करणीयः। तत्राऽपि माघ-फाल्गुन-वैशाख-ज्येष्ठमासेषु यस्मिन् दिवसे गृहप्रवेशमुहूर्त्तः स्यात्तस्मिन् दिवसे गृहप्रवेशः श्रेष्ठो भवति। प्रसङ्गेऽस्मिन् वसिष्ठवचनम् -

**माघेऽर्थलाभः प्रथमप्रवेशः पुत्रार्थलाभः खलु फाल्गुने च।**

**चैत्रेऽर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः ।।** (तत्रैव टीकायाम्)

तथा गृहप्रवेशतः प्राग्दिने वास्तुपुरुषस्य अर्चनं पञ्चलोकपालबलिं च विधाय गृहप्रवेशः शुभमुहूर्त्ते करणीयः। तत्र मार्गशीर्षकार्तिकमासयोः गृहप्रवेशः मध्यमफलप्रदः भवति। तत्र प्राचीनाचार्यैः शास्त्रमर्मज्ञैः कथिते शुभमासे, शुभनक्षत्रे, शुभवासरे च नूतनगृहं प्रविशेत्। प्रसादम् तु उत्तरायणे प्रविशेत्। तथा तृणादिभिर्निर्मिते गृहे तु सर्वदा प्रविशेदिति गृहप्रवेशविचारः कथितः।

तत्र त्रिविधगृहप्रवेशस्य कृते ग्राह्याग्राह्यतिथिनक्षत्रादिविषये स्पष्टयति ग्रन्थकारः, यथा -

**क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे।**

**शुक्ले च पक्षे सुतरां प्रवृद्ध्यै कृष्णे च तावद्दशमीं च यावत्।।**

**चित्रोत्तराधातृशशाङ्कमित्रवस्वन्त्यवारीश्वरभेषु नूनम्।**

**आयुर्धनारोग्यसुपुत्रपौत्रसुकीर्तिदः स्यात्त्रिविधः प्रवेशः।।** (बृ.वा.गृ.प्र.श्लो.७-८)

अपूर्वसपूर्वद्वन्द्वाह्वयेति प्रवेशत्रये येषु नक्षत्रेषु पापग्रहाः स्थिताः सन्ति तानि नक्षत्राणि, अपि च अशुभग्रहैः दृष्टं युक्तं च नक्षत्रम्, अथवा सप्तशलाकानुसारं वेधितं नक्षत्रं त्याज्यम्। तत्रापि शुक्ले पक्षे गृहप्रवेशे कृते सति निश्चयेन गृहस्योन्नतिः जायते। तथा च कृष्णपक्षस्य प्रतिपत्तिथितः दशमीतिथिं यावत् गृहप्रवेशः करणीयः। चित्रा, उत्तरात्रयम् (उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा), रोहिणी, मृगशिरा, अनुराधा, धनिष्ठा, रेवती, शतभिषा च नक्षत्राणि गृहप्रवेशार्थं शुभफलप्रदानि कथ्यन्ते। एतेषु नक्षत्रेषु त्रिविधः अपूर्वसपूर्वद्वन्द्वाह्वयेति गृहप्रवेशः निश्चयेन आयुप्रदः, धनप्रदः, आरोग्यप्रदः, सुपुत्रपौत्रप्रदः, सुकीर्तिदश्च स्यात्।

पुनरपि अन्यमतेन गृहप्रवेशस्य शुभनक्षत्राणि शुभकालश्च कथ्यते -

**पौष्णे धनिष्ठास्वथ वारुणेषु स्वायंभुवर्क्षेषु त्रिषूत्तरासु।**

**अक्षीणचन्द्रे शुभवासरे च तिथावरिक्ते च गृहप्रवेशः।।**

**शुभः प्रवेशो देवेज्यशुक्रयोर्दृश्यमानयोः ।**

**व्यार्कारवारतिथिषु रिक्तामावर्जितेषु च ।।**

**वस्वीज्यान्त्येन्दुवरुणत्वाष्ट्रमित्रस्थिरोडुषु ।**

**दिवा वा यदि वा रात्रौ प्रवेशो मंगलप्रदः ।।** (बृ.वा.गृ.प्र.श्लो.९-११)

रेवती-धनिष्ठा–शतभिषा-रोहिणी–उत्तराफाल्गुनी-उत्तराषाढा-उत्तराभाद्रपदनक्षत्रेषु, पूर्णचन्द्रे (शुक्लपक्षपञ्चमीतः कृष्णपक्षस्य पञ्चमीं यावत्), गुरुशुक्रयोः उदये सति, सूर्यभौमवासरौ अतिरिच्य सोम-बुध-गुरु-शुक्रवारेषु, रिक्तामावर्जितेषु (चतुर्थी-नवमी-चतुर्दशी-अमातिथिवर्जितेषु) अन्यशुभतिथिषु दिवा वा रात्रौ च अपूर्वसपूर्वद्वन्द्वाख्यः गृहप्रवेशः कार्यः।

**गृहप्रवेशे लग्नविचारः**

प्रत्येकमुहूर्त्तविचारे लग्नस्य प्राधान्यमस्ति। यतो हि शुभलग्ने कृतस्य कर्मणः फलं शुभम्, अशुभलग्ने च अशुभम्। तत्र लग्नमित्युक्ते क्रान्तिक्षितिजवृत्तयोः प्राक्सम्पातः। वस्तुतः एकस्मिन् दिवसे मेषवृषादिद्वादशलग्नानि भवन्ति। तत्रापि चिरस्थिरद्विस्वभावभेदेन लग्नं त्रिविधम्। तत्र कार्यभेदेन लग्नस्य प्राशस्त्यमुक्तम्। अतः गृहप्रवेशार्थमपि लग्नानि निर्धारितानि सन्ति। तेषु शुभलग्नेषु कृतः गृहप्रवेशः पुरुषार्थचतुष्टयफलप्रदायको भवति। तत्र गृहप्रवेशे लग्ननिर्णयः क्रियते यथा -

**मेषे यानं घटे व्याधिर्धान्यहानिर्मृगे गृहम् ।**
**विशतां कर्कटे नाशः शेषलग्नेषु शोभनम् ।।**
**निन्दिता अपि शुभांशसमेतास्तौलिमेषमकराः सकुलीराः ।**
**कर्तुरौपचयगाश्च विलग्ने राशयः शुभफलाश्च भवन्ति।।** (बृ.वा.गृ.प्र.श्लो.१२-१३)

मेषराशौ गृहप्रवेशलग्ने सति गृहेशः सदा वाहनोपरि एव स्थितो भवति, अर्थात् सः सर्वदा यात्रायामेव व्यस्तो भवतीति भावः। कुम्भलग्ने गृहप्रवेशे सति व्याधिभयं जायते। मकरलग्ने गृहप्रवेशे सति गृहे धान्यसमृद्धिः न भवति अपितु तस्य धनक्षयः जायते। कर्कलग्ने गृहप्रवेशे सति गृहस्य गृहकर्तुः वा विनाशो भवति। शेषलग्नेषु वृष-मिथुन-सिंह-कन्या-तुल-वृश्चिक-धनु-मीनलग्नेषु गृहप्रवेशे सति शोभनम्। तत्र निन्दितलग्ने सत्यपि यदि लग्नं वर्गेषु स्वोच्च-स्वमूलत्रिकोण-स्वगृह-अतिमित्र-मित्रांशैः युक्तं स्यात्, एवं गृहप्रवेशलग्ने वा उपचयस्थानेषु(३,६,१०,११) यदि कर्क-तुल-मेष-मकरराशयः संस्थिताः स्युस्तत्र गृहकर्तुः राशिः अपि स्यात् तदा गृहप्रवेशः शुभफलदो भवति।

अत्र गृहकर्तुः जन्मराशितः गृहप्रवेशकालिकलग्नं यावत् संख्यामालोच्य द्वादशलग्नानां प्रवेशफलं किमिति लल्लाचार्यः लिखति यत् -

**व्याधिहा धनहा चैव वित्तदो बन्धुनाशकृत् ।**
**पुत्रहा शत्रुहा स्त्रीघ्नः प्राणहा पिटकप्रदः ।।**
**सिद्धिदो धनदश्चैव भवेत्तज्जन्मराशितः ।**
**लग्नस्थः क्रमशो राशिर्जन्मलग्नात् प्रवेशने ।।** (बृ.वा.गृ.प्र.श्लो.१४-१५)

गृहप्रवेशे गृहकर्तुः जन्मलग्नात् जन्मराशितो वा प्रवेशलग्नराशिः प्रथमादिद्वादशस्थानगतः द्वादशविधं फलं प्रयच्छति। तद्यथा - यदि जन्मलग्नं वा जन्मराशिः एव प्रवेशकालिकलग्नराशिः स्यात्तदा आरोग्यं लभते। यदि जन्मलग्नतः वा जन्मराशितः प्रवेशलग्नं द्वितीये स्यात्तदा धनहानिः जायते। यदि जन्मलग्नतः वा जन्मराशितः

प्रवेशकालिकलग्नराशिः तृतीये स्यात्तदा धनप्राप्तिः भवति। यदि प्रवेशलग्नं चतुर्थे स्यात्तदा मित्राणां नाशो भवति। यदि प्रवेशलग्नं पञ्चमे स्यात्तदा पुत्रहानिः जायते। यदि प्रवेशलग्नं षष्ठे स्यात्तदा रिपुनाशो भवति। यदि प्रवेशलग्नं सप्तमे स्यात्तदा पत्नीनाशः जायते। यदि प्रवेशलग्नं अष्टमे स्यात्तदा गृहकर्तुः मृत्युः भवति। यदि प्रवेशलग्नं नवमे स्यात्तदा पिटकोपद्रव(फोडा-फुन्सी)कारकरोगः जायते। यदि प्रवेशलग्नं दशमे स्यात्तदा कार्यसिद्धिः भवति। यदि प्रवेशलग्नम् एकादशे स्यात्तदा धनलाभः जायते। यदि प्रवेशलग्नं द्वादशे स्यात्तदा अशुभफलदो भवति।

स्पष्टार्थमुदाहरणम् यथा - अत्र कल्प्यते यत् गृहकर्तुः जन्मराशिः मिथुनः अस्ति, यदि तत्र गृहप्रवेशलग्नं मीनं स्यात्तदा मिथुनात् मीनं यावत्संख्या दश भवति तेन अत्र गृहप्रवेशलग्नस्य फलं कार्यसिद्धिप्रदायकमस्ति।

**रामदैवज्ञमते लग्नशुद्धिविचार:**

आचार्यरामदैवज्ञेन गृहप्रवेशलग्नात् द्वादशभावेषु स्थितानां शुभाशुभग्रहाणां फलं कथ्यते -

**त्रिकोणकेन्द्रायधनत्रिगैः शुभैर्लग्नात्रिषष्ठायगतैश्च पापकैः।**
**शुद्धाम्बुरन्ध्रे विजनुर्भमृत्यौ व्यर्कारिरिक्ताचरचैत्रदर्शे ।।** (बृ.वा.गृ.प्र.श्लो.१६)

गृहप्रवेशलग्नतः त्रिकोणे (पञ्चमे, नवमे), केन्द्रे (प्रथमे, चतुर्थे, सप्तमे, दशमे), एकादशे, द्वितीये, तृतीये चेति एतेषु भावेषु शुभग्रहाः(गुरु-शुक्र-बुध-पूर्णचन्द्राः)स्थिताः भवेयुः, तथा तृतीय-षष्ठ-एकादशभावेषु पापग्रहाः स्थिताः स्युः, एवं चतुर्थभावे अष्टमभावे च कश्चिदपि ग्रहः न स्यात्, अपि च गृहकर्तुः जन्मराशिः अष्टमभावे न स्यात्तदा गृहप्रवेशः करणीयः। तत्रापि रविभौमवासरौ, रिक्तातिथीः, चैत्रमासम्, अमावस्यां च एतान् समस्तान् विहाय गृहप्रवेशः शुभदः स्यात्।

**उदाहरणम् -** अत्र कल्प्यते यत् गृहकर्तुः जन्मराशिः मिथुनः अस्ति, एवमत्र शुक्लपक्षे द्वितीयातिथौ उत्तराभाद्रपदनक्षत्रे गुरुवासरे गृहप्रवेशलग्नं मीनं स्यात्तदा मीनलग्नानुसारं गृहप्रवेशकालिकं चक्रं यथा -

**गृहप्रवेशलग्नचक्रम्**

१२ च.
०१
०२ श. रा.
०३ शु. बु.
०४ गु.
०५ सू.
०६
०७
०८ के.
०९
१० मं.
११

अत्र गृहकर्तुः जन्मराशिः मिथुनः गृहप्रवेशलग्नात् चतुर्थे विद्यते, एवं शुक्र-बुध-पूर्णचन्द्राः केन्द्रभावेषु सन्ति तथा गुरुः पञ्चमे त्रिकोणे अस्ति। अत्र पापग्रहाः शनि-सूर्य-भौमाः तृतीय-षष्ठ-एकादशभावेषु सन्ति। अनेन एतत् गृहप्रवेशलग्नं शुभफलदायकमस्ति।

वशिष्ठमते प्रवेशे विशेषः यथा -

**कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं विप्रान्पूज्यानग्रतो पूर्णकुम्भान् ।**
**रम्यं हर्म्यं तोरणं स्रग्वितानैः सम्यक्स्त्रीभिर्गीतवाद्यैर्विशेत्तत् ।।** (बृ.वा.गृ.प्र.श्लो.१७)

तत्र गृहप्रवेशसमये शुक्रग्रहः पृष्ठे भागे भवेत्। अर्थात् प्रवेशद्वारस्य समक्षे स्थिता या दिक् सा गृहप्रवेशे पृष्ठस्थिता भवति। शुक्रस्यापि पूर्वादिदिक्षु परिभ्रमणं चन्द्रसदृशमेव भवति। तत्रनिम्नप्रकारेण द्वारदिगनुसारं पृष्ठस्थशुक्रं विजानीयात् -

| **द्वारदिक्** | **शुक्रराशयः** |
|---|---|
| पूर्वा | मेषसिंहधनुराशयः |
| दक्षिणा | वृषकन्यामकराः |
| पश्चिमा | मिथुनतुलाकुम्भाः |
| उत्तरा | कर्कवृश्चिकमीनाः |

तत्र गृहप्रवेशकाले वक्षमाणविधिना सूर्यः वामभागे करणीयः। गृहं तु महत्पुण्यार्जनस्य संग्रहस्थलमस्ति। प्रथमवारं तस्मिन् प्रवेशाय ज्येष्ठानां श्रेष्ठानां पूज्यानां ब्रह्मणानां देवानां देवीनां गुरूणां च शुभाशीः अपेक्ष्यते। अतः शुभमुहूर्त्ते शुभलग्ने च शुभलक्षणैः संगीतवाद्यादिभिः ब्राह्मणैः गुरुपूज्यैश्च सहितः गृहे प्रविशेत्। एवं तदा ब्राह्मणान् पूज्यान् जलपूर्णकलशान् च गृहकर्तुः अग्रभागे कृत्वा शोभनैः तोरणमालादिसंयुक्तैः सुमनोहरैः स्त्रीगानवाद्यादिभिः सहितः सपरिपारः गृही सुन्दरप्रासादे रमणीयभवने वा प्रविशेत्। प्रसङ्गेऽस्मिन् श्रीपतिवचनम् -

**कृत्वा विप्रान् सजलकलशं चाग्रतो वामतोऽर्के**
**स्नातः स्रग्वी विमलवसनो मंगलैर्वेदघोषैः ।**
**व्यस्तैः यात्राकथितशकुनैर्द्वारमार्गेण राजा ।**
**हर्म्यं पुष्पप्रकररुचिरं तोरणाढ्यं विशेच्च ।** (तत्रैव टीकायाम्)

गृहप्रवेशे भकूटशुद्धिमपि परीक्षेदिति रामदैवज्ञस्य मतम्। यथा -

**अग्रेऽम्बुपूर्णं कलशं द्विजाश्च कृत्वा। विशेद्वेश्ममध्ये भकूटेऽथ शुद्धे ।।** (तत्र टीकायाम्)

येषां गृहाणां मुख्यद्वारं क्रमशः पूर्व-दक्षिण-पश्चिम-उत्तरदिक्षु भवति, तेषां क्रमशगृहप्रवेशलग्नात् अष्टमस्थानतः पञ्चमस्थानतः द्वितीयस्थानतः एकादशस्थानतश्च पंच पंचराशिषु सूर्ये सति वामसंज्ञकः सूर्य इति कथ्यते। उक्तः वामरविविचारः यथा -

**वामो रविर्मृत्युसुतार्थलाभतोऽर्के पंचमे प्राग्वदनादिमन्दिरे।**
**पूर्णातिथौ प्राग्वदने गृहे शुभो नन्दादिके याम्यजलोत्तरानने।।** (बृ.वा.गृ.प्र.श्लो.१८)

यदि पूर्वाभिमुखं गृहम् अस्ति तदा प्रवेशलग्नतः अष्टम-नवम-दशम-एकादश-द्वादशभावेषु सूर्ये सति वामो रविः ज्ञेयः। एवमेव यदि दक्षिणाभिमुखं गृहं स्यात्तदा प्रवेशलग्नतः पञ्चम-षष्ठ-सप्तम-अष्टम-नवमभावेषु सूर्ये सति वामरविः ज्ञेयः। पश्चिमाभिमुखे गृहे प्रवेशलग्नतः द्वितीय-तृतीय-चतुर्थ-पंचम-षष्ठभावेषु सूर्ये सति वामरविः, तथैव उत्तराभिमुखे गृहे प्रवेशलग्नतः एकादश-द्वादश-प्रथम-द्वितीय-तृतीयभावेषु सूर्ये सति वामरविः ज्ञेयः। तत्र पूर्वाभिमुखे गृहे प्रवेशार्थं पूर्णातिथयः पञ्चमी-दशमी-पूर्णिमातिथयः शुभदाः भवन्ति, एवमेव दक्षिणाभिमुखे गृहे प्रवेशार्थं नन्दा (१, ६, ११)तिथयः शुभाः भवन्ति। पश्चिमाभिमुखे गृहे प्रवेशार्थं भद्रा (२,७,१२)तिथयः शुभाः भवन्ति। उत्तराभिमुखे गृहे प्रवेशार्थं जया (३, ८, १३)तिथयः शुभाः भवन्ति। स्पष्टार्थं चक्रं यथा -

| पूर्वाभिमुखं | दक्षिणाभिमुखं | पश्चिमाभिमुखं | उत्तराभिमुखं | गृहद्वारम् |
|---|---|---|---|---|
| पूर्णातिथयः (५,१०,१५) | नन्दातिथयः (१,६,११) | भद्रातिथयः (२,७,१२) | जयातिथयः (३,८,१३) | तिथयः |
| ८,९,१०, ११, १२ | ५, ६, ७, ८, ९ | २, ३, ४, ५, ६ | ११, १२, १, २, ३ | वामसूर्यः प्रवेशलग्नात् भावसंख्या |

एवमेव अन्यवचनानि-

**अष्टमात्पञ्चमाद्वित्ताल्लाभात्पंचस्थिते रवौ।**
**पूर्वादिदिङ्मुखं गेहं विशेद्वामो भवेद्यतः।।** (तत्रैव टीकायाम्)

**उदाहरणम् -** अत्र कल्प्यते यत् शुक्लपक्षे द्वितीयातिथौ उत्तराभाद्रपदनक्षत्रे गुरुवासरे गृहप्रवेशलग्नं मीनं स्यात्तदा तत्र मीनलग्नानुसारं गृहप्रवेशकालिकं चक्रं यथा -

१२ च.
०१
०२ श. रा.
०३ शु. बु.
०४ गु.
०५ सू.
०६
०७
०८ के.
०९
१० मं.
११

अत्र शुक्र-बुध-पूर्णचन्द्राः केन्द्रभावेषु सन्ति तथा गुरुः पञ्चमे त्रिकोणे अस्ति। पापग्रहाः शनि-सूर्य-भौमाः तृतीय-षष्ठ-एकादशभावेषु सन्ति। एतत् गृहप्रवेशलग्नं शुभफलदायकमस्ति। अत्र सूर्यः षष्ठभावे अस्ति अतः पश्चिमाभिमुखगृहस्य दक्षिणाभिमुखगृहस्य च कृते वामरविः भवेत्। अत्र शुक्रः मिथुनराशौ विद्यते, अतः पश्चिमाभिमुखगृहस्य कृते पृष्ठस्थशुक्रः वर्त्तते। अनेन अस्मिन् लग्ने मुहूर्त्ते पश्चिमाभिमुखे नूतनगृहे गृहप्रवेशः कर्तुं शक्यते।

**गृहप्रवेशे कुम्भचक्रम्**

**वक्त्रे भूरविभात्प्रवेशसमये कुम्भेऽग्निदाहः कृताः।**
**प्राच्यामुद्वसनं कृता यमगताः लाभः कृताः पश्चिमे।।**
**श्रीर्वेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे।**
**रामास्स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा।।** (बृ.वा.गृ.प्र.श्लो.१९)

प्रवेशकाले नक्षत्रस्य शुभाशुभज्ञानाय सूर्यनक्षत्रतः चन्द्रनक्षत्रं यावत् गणयित्वा कुम्भचक्रस्य निर्माणं क्रियते। अर्थात् प्रवेशकालिकलग्नचक्रे सूर्यचन्द्रौ कस्मिन् कस्मिन् नक्षत्रे स्थितौ स्तः इति द्रष्टव्यं भवति। तत्र कुम्भचक्रे घटस्य मुखाद्यवयवानां चिन्तनमपि भवति। तद्यथा यदि सूर्यनक्षत्रात् चन्द्रनक्षत्रं प्रथमं नक्षत्रं भवेत्, अर्थात् सूर्यनक्षत्रमेव गृहप्रवेशस्य चन्द्रनक्षत्रं स्यात्तदा तन्नक्षत्रं घटस्य मुखे चिन्तयेत् तस्य फलं अग्निदाहो भवति। तदग्रिमानि चत्वारि नक्षत्राणि घटस्य पूर्वे चिन्त्येत्, तस्य फलं प्रवासः स्यात्। तदनन्तरं चत्वारि नक्षत्राणि (सूर्यनक्षत्रतः चन्द्रनक्षत्रं यदि ६षड्संख्यातः ९नव संख्यां यावत् स्यात्तदा) घटस्य दक्षिणभागे कल्पयेत्, तस्य फलं लाभः भवेत्। ततः अग्रिमचत्वारि नक्षत्राणि(१० दशसंख्यातः १३त्रयोदशसंख्यां यावत्) कुम्भस्य पश्चिमे कल्पयेत् तत्र प्रवेशनक्षत्रे सति धनप्राप्तिं विजानीयात्। तदग्रिमचत्वारि नक्षत्राणि (यदि सूर्यनक्षत्रतः चन्द्रनक्षत्रं यदि १४चतुर्दशसंख्यातः १७सप्तदशसंख्यामध्ये स्यात्तदा) कुम्भस्योत्तरे भागे चिन्तयेत् तत्र चन्द्रनक्षत्रे सति कहल इति फलं ज्ञेयम्। तदग्रिमचत्वारि नक्षत्राणि (सूर्यनक्षत्रतः चन्द्रनक्षत्रं यदि १८अष्टादशसंख्यातः २१एकविंशतिसंख्यामध्ये स्यात्तदा)कुम्भस्योदरे चिन्त्येत् तस्य फलं गृहविनाशः भवेत्। कुम्भस्य गुदाभागे (निम्नस्थाने) तदग्रिमत्रीणि नक्षत्राणि कल्प्येत् तत्र प्रवेशनक्षत्रे सति फलं गृहस्य स्थिरत्वं भवति, कुम्भस्य कण्ठे तदग्रिमाणि त्रीणि नक्षत्राणि परिकल्येत् तत्र प्रवेशनक्षत्रे सति नित्यं गृहस्य स्थैर्य जानीयादिति भावः। स्पष्टार्थं कुम्भचक्रं यथा -

| स्थानम् | मुखे | पूर्वे | दक्षिणे | पश्चिमे | उत्तरे | गर्भे | गुदायाम् | कण्ठे |
|---|---|---|---|---|---|---|---|---|
| सूर्यनक्षत्रतः चन्द्रनक्षत्रं यावत् | १ | २-५ | ६-९ | १०-१३ | १४-१७ | १८-२१ | २२-२४ | २५-२७ |
| | अग्निदाहः | वासम् | लाभः | लक्ष्मी | कलहः | विनाशः | स्थैर्यम् | स्थिरत्वम् |
| फलम् | अशुभम् | | शुभम् | | अशुभम् | | शुभम् | |

अत्र प्रकारान्तरम् अपि प्राप्यते -

**प्रवेशे कलशेऽर्क्षात्पञ्चनागाष्टकक्रमात्।**
**अशुभं च शुभं ज्ञेयमशुभं च शुभं तथा।।**

**उदाहरणम् -** अत्र कल्प्यते यत् शुक्लपक्षे द्वितीयातिथौ उत्तराभाद्रपदनक्षत्रे गुरुवासरे गृहप्रवेशलग्नं मीनं स्यात्तदा तत्र मीनलग्नानुसारं गृहप्रवेशकालिकं चक्रं यथा -

१२ च.
०१
०२ श. रा.
०३ शु. बु.
०४ गु.
०५ सू.
०६
०७
०८ के.
०९
१० मं.
११

अत्र शुक्र-बुध-पूर्णचन्द्राः केन्द्रभावेषु सन्ति तथा गुरुः पञ्चमे (त्रिकोणे) अस्ति। पापग्रहाः शनि-सूर्य-भौमाः तृतीय-षष्ठ-एकादशभावेषु सन्ति। अनेन एतत् गृहप्रवेशलग्नं शुभफलदायकमस्ति। अत्र सूर्यः मघानक्षत्रे, एवं चन्द्रः उत्तराभाद्रपदनक्षत्रे वर्तते। कुम्भचक्रानुसारं सूर्यनक्षत्रात् द्वादशनक्षत्रे कुम्भस्य पश्चिमभागे चन्द्रनक्षत्रमस्ति। अनेन अयं गृहप्रवेशः लक्ष्मीप्रदायको भवति।

**गृहप्रवेशे कर्त्तव्याकर्त्तव्यविचारः**

गृहप्रवेशे शुभलक्षणानां कथनादनन्तरम् अशुभलक्षणमपि सूचयति। यतो हि अशुभलक्षणलक्षिते गृहप्रवेशे सति गृहस्य विनाशो भवति। अतोऽत्र गृहप्रवेशे कर्त्तव्याकर्त्तव्यविचारः क्रियते। अत्र गृहप्रवेशे निषेधविचारः कथ्यते -

**अकपाटमनाच्छन्नमदत्तबलिभोजनम्।**
**गृहं न प्रविशदेवं विपदामाकरं हि तत्।।** (बृ.वा.गृ.प्र.श्लो. २०)

कपाटरहिते आच्छादनरहिते च नूतनगृहे प्रवेशः न करणीयः। अदत्तं बलिभोजनम् अर्थात् यत्र वास्तुदेवादीनां कृते सदीपं दधिमाषभक्तादिसमर्पणं न विहितमपि च ब्राह्मणभोजनमपि नाभवत्, तस्मिन् गृहे न प्रविशेत्। यतो हि तत् गृहं विपत्कारकं (विपत्तीनां गृहं) भवतीति भावः। प्रसङ्गेऽस्मिन् गृहप्रवेशे गृहपतिकर्त्तव्यमुच्यते यथा -

**एवं सुलग्ने स्वगृहं प्रविश्य वितानपुष्पश्रुतिघोषयुक्तम्।**
**शिल्पज्ञदैवज्ञविधिज्ञपौरान् राजार्चयेद्भूमिहिरण्यवस्त्रैः।।** (बृ.वा.गृ.प्र.श्लो. २१)

अनेन प्रकारेण दोषरहिते शुभ लग्ने तोरणवितान-कुसुम-वेदध्वन्यादिभिर्युक्तं, स्वगृहं प्रविश्य राजा भूमिस्वर्णालंकारवस्त्रादिभि: स्थपतिस्थापकादीन् ज्योतिर्वित्कर्मकाण्डज्ञान् नागरिकान् च संतोषयेदिति भाव:। अर्थात् तेभ्य: शिल्पज्ञदैवज्ञविधिज्ञपौरेभ्य: भूमिस्वर्णालंकारवस्त्रादी: अर्पयेत्। तथैवोक्तं श्रीपतिना–

**ततो नृपो विप्रसुहृत्पुरोधस: शिल्पज्ञभूगोलविदश्च भागिन:।**
**धनैश्च रत्नै: पशुभि: समर्चयेत् सदान्धदीनान् पुरवासिनस्तथा।।** (तत्र टीकायाम्)

कश्यपमप्येवाह -

**एवं य: प्रविशेद्राजा योगे दैवज्ञकीर्त्तिते।**
**काले शास्त्रोक्तविधिना शरीरसुखमश्नुते।।** (तत्र टीकायाम्)

**जीर्णगृहप्रवेशविचार:**

**जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्जयो: श्रावणकेऽपि सत्स्यात्।**
**वेशोऽम्बुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणाऽत्र।।** (बृ.वा.गृ.प्र.श्लो. २२)

यस्य जीर्णगृहस्य पुनरुद्धार: कृत: तस्मिन् पुरातनगृहे अग्निना जलेन अतिवृष्ट्या वायुना भूकम्पेन दैवापदकारणेन वा यदि आवासगृहं नष्टं स्यात्तदा नवेऽपि गृहे प्रवेश: मार्गशीर्षकार्तिकश्रावणमासेषु अपि च शतभिषापुष्यस्वातीधनिष्ठानक्षत्रेषु शुभदो भवति। अत्र जीर्णगृहप्रवेशे आपत्तिकाले नवे गृहेऽपि गुरुशुक्रास्तादिविचार: आवश्यक: नास्ति। अत्र ज्योति:प्रकाशे कथ्यते -

**नित्ययाने गृहे जीर्णे प्राशने परिधानके।**
**वधुप्रवेशे माङ्गल्ये न मौढयं गुरुशुक्रयो:।।** (तत्र टीकायाम्)

यात्रानिवृत्तौ नृपप्रवेशे नक्षत्रविचार: प्रतिपाद्यते यथा -

**भूपानां मृदुभिर्ध्रुवै: प्रविशनं यात्रानिवृत्तौ शुभम्।**
**स्याद्ध्रुयो गमनं चरर्क्षलघुभै: रुद्रैर्मृतिर्भूपते:।**
**तीक्ष्णैर्भूपकुमारकस्य नृपते: पत्न्या विशाखाह्वये।**
**धिष्ण्ये हव्यभुजो गृहं प्रविशतां संदह्यते वह्निना।।** (बृ.वा.गृ.प्र.श्लो. २३)

मृदुभि: (मृगशीर्ष-रेवती-चित्रा-अनुराधानक्षत्रै:) ध्रुवै: (उ.षा.-उ.फा.-उ.भा.-रोहिणीनक्षत्रै:) च युक्ते दिवसे नृपस्य यत्रावसाने सति (सपूर्वगृहप्रवेशे सति) शुभं भवतीति भाव:। तत्र पुन: कथ्यते यत् - चरर्क्षै: (स्वाती-पुनर्वसु-श्रवण-धनिष्ठाशतभिषानक्षत्रै:) लघुभै: (हस्त-अश्विनी-पुष्यनक्षत्रै:) आद्रानक्षत्रेण च युक्ते दिवसे यत्रावसाने सति नृपस्य सपूर्वगृहप्रवेश: मरणाय भवति। तीक्ष्णै: (आर्द्रा-मूल-आश्लेषा-ज्येष्ठानक्षत्रै:) युक्ते दिवसे सपूर्वप्रवेशे सति राजकुमारस्य मृतिर्भवति। विशाखानक्षत्रे सपूर्वप्रवेशे सति नृपते: पत्न्या: (राजमहिष्या:) मरणं भवतीति ज्ञेयम्। अत्र कृत्तिकानक्षत्रे सपूर्वगृहप्रवेशे सति गृहं वह्निना संदह्यते अर्थात् भस्मीभूतो भवति। अत: चर-लघु-तीक्ष्णसंज्ञकनक्षत्रेषु कृत्तिकाविशाखयोश्च सपूर्वप्रवेश: न सुखदो भवतीति भाव:।

**यात्रानिवृत्तौ गृहप्रवेशे मास-लग्नविचार:**

**वैशाखमासेऽपि फाल्गुनेऽपि ज्येष्ठे प्रवेश: शुभदो गृहस्य।**
**यात्रानिवृत्तावथवा नवस्य भूमीभुजां द्विर्भवनस्थिरेषु।।** (बृ.वा.गृ.प्र.श्लो.२४)

नृपाणां वैशाखमासे फाल्गुने ज्येष्ठे अपि च द्विस्वभावलग्नेषु (३, ६, ९, १२लग्नेषु) तथा च स्थिर लग्नेषु (२, ५, ८, ११ लग्नेषु) यात्रानन्तरं सपूर्वगृहप्रवेश:, अथवा नूतनस्य भवनस्य अपूर्वप्रवेश: शुभद: स्यादिति।

**सन्दर्भग्रन्था:**

१) बृहद्वास्तुमाला, चौखम्बा सुरभारती ग्रन्थमाला, सं. २०१६, वारणसी
२) मुहूर्तचिन्तामणि:, श्रीमद्रामदैवज्ञविरचित:, चौखम्बा सुरभारती ग्रन्थमाला, वारणसी

—o—

संविदाध्यापक:
केन्द्रीयसंस्कृतविश्वविद्यालय:
श्रीसदाशिवपरिसर:, पुरी